साहसमये तथा
हासमये आकाशे
किम्
उड्डयितुम् इच्छन्ति ?



डाल्टन्
सुपर् कामिक्स्
प्रतिपक्षं भवतः कृते
तम् अवकाशं कल्पयति ।

मूल्यं केवलं रू. २.५०-एकस्याः प्रतिकृतेः ।
सुलभतया प्राप्तुं शक्या एषा प्रथमा
कामिक्स् पत्रिका अद्वितीया एव ।

अस्याः ३६ वर्णमयपृष्ठानि भवन्तं वीरपुरुषैः
सह रहस्यं तथा रोमाञ्चकारिविश्वं नयन्ति ।

सुपर मैन
तथा
बैटमैन

डॉल्टन कामिक्स
डीसी

डाल्टन् पब्लिकेशन्स्
मद्रास् ६०० ०२६



# चन्दमामा

जून-१९८४

*

## अन्तरङ्गम्



*


प्रतिकृति मूल्यम रू. २-००
वार्षिकं ग्राहकशुल्कम रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'
सञ्चालकः 'नागिरेड्डी'

संस्कृतम् इदानीम् अधिकाधिकं पण्डितानां मुखेषु एव विलसति । सामान्यजनेभ्यः एषा भाषा दूरे एव अस्ति । यावत् सामान्यजनेभ्यः दूरं तिष्ठति, तावत्पर्यन्तं संस्कृतस्य विशेषप्रगतिः न भवति इति तु निश्चितम् एव । अतः सामान्यजनानां समीपं संस्कृतं नेतव्यम् अस्ति । सरलं मुखम् आश्रितं चेत् एव सामान्यजनाः संस्कृतं ज्ञातुं शक्नुयुः। एतदर्थं प्रादेशिकभाषासु विद्यमानाः संस्कृतशब्दाः अधिकाधिकं उपयोक्तव्याः । संस्कृतं ये किञ्चित् पठितवन्तः तेषाम् अपि अर्थबोधः यथा स्यात् तथा सरला शैली आश्रयणीया ।

सम्पुटः– १]        जून्–१९८४        [सञ्चिका–३

प्रतिकृतिमूल्यम् रू.२/- * वार्षिकं ग्राहकशुल्कम् रू.२४/-



# चन्दमामा प्रजल्पति



## गजः वाचं वदति

सोवियत्रष्यादेशस्य 'कोरगाण्डा' प्राणिसङ्ग्रहालये वाटर' नामकः गजः स्वीयं नाम वदति । सः आगतान् जनान् दृष्ट्वा 'भवान् चतुरः' इति अपि वदति । द्रष्टुम् आगताः यात्रिकाः एव एतस्य गजस्य गुरवः इति श्रूयते । शुकवत् एषः गजः अपि वाचम् अनुकरोति ।

## मानवसदृशाः वानराः



चीनादेशस्य 'हूबि' पर्वते मानवसदृशाः वानराः एषु दिनेषु दृष्टाः । शरीरं सर्वं ताम्रवर्णोपेतम् । दीर्घाः केशाः । एतेषां औन्नत्यं 'सप्तफूट्' । एवं दीर्घकायाः अपि एते शाखातः शाखां उत्प्लवन्ते ।



## रात्रिं दिवाकर्तुम् इच्छति

फ्रान्सदेशस्य राष्ट्रियव्योमसंशोधनकेन्द्रे 'क्रिस्टियन् मार्चल' नामकः प्रसिद्धः विज्ञानी अस्ति । सः रात्रिं दिवा-कर्तुम् इच्छति, वदति च– "बृहदाकाराः दर्पणाः चन्द्रस्य अपेक्षया अपि उपरि स्थापनीयाः । तत्र पतिताः सूर्यरश्मयः भूमौ प्रतिफलिताः भवन्ति । तदा प्रपञ्चस्य क्वचित् भागे वा रात्रिः दिवाभूता भविष्यति" इति ।

## भवन्तः जानन्ति वा ?

१. हर्षवर्धनमहाराजस्य आस्थानं कः कविः अलङ्कृतवान् ? तेन लिखिताः ग्रन्थाः के ?

२. १९ शतके प्रसिद्धिं गतौ आंग्लदम्पती कौ ?

३. १९शतके इग्लण्डदेशे प्रसिध्दे कादम्बरीरचयित्र्यौ सहोदर्यौ के ?

४. बालसाहित्ये प्रसिद्धः 'डेनिष्' देशस्य साहित्यकारः कः ?

५. स्वगृहस्य नाम विविधैः अक्षरैः प्रसिद्धः कः आंग्लकविः लिखितवान् ?

(उत्तराणि ६४तमे पृष्ठे)



# असत्यपरम्परा

माधवपुरस्य भूस्वामिनः गृहे गोविन्दः सेवकः आसीत् । गोविन्दस्य पिता अपि तस्मिन् एव गृहे सेवकः आसीत् ।

गोविन्दस्य बाल्ये पिता मृतः । मातरं विना समीपबन्धुः तस्य कोऽपि नास्ति । अतः दयालुः भूस्वामी एव गोविन्दं पोषितवान् । तथैव पितुः स्थाने एव गोविन्दं नियोजितवान् । गोविन्दः युवकः अभवत् । भूस्वामी गोविन्दं पुत्रम् इव वात्सल्येन पोषयति स्म ।

एकदा भूस्वामी गोविन्दम् एकं कार्यम् उक्तवान् । "आगामिपूर्णिमायां पार्श्वग्रामस्य भूस्वामिनः पुत्रेण सह, मम पुत्र्याः विवाहस्य निश्चयकार्यक्रमः चिन्तितः आसीत् । कारणान्तरेण सः कार्यक्रमः अग्रे नीतः । एतं विषयं पार्श्वग्रामस्य भूस्वामिनं सूचयतु" इति उक्त्वा भूस्वामी नगरं गतः ।

गोविन्दः यदा प्रस्थातुम् उद्युक्तः तदा कार्यभारी किमपि अन्यत् कार्यं आदिष्टवान् । ततः स्वामिनी, यजमानस्य पुत्री च अन्यत् कार्यम् उक्तवत्यौ । सूर्यास्तपर्यन्तम् अपि एतादृशकार्याणि एव आपतितानि ।

पार्श्वग्रामस्य मार्गः बहु निम्नोन्नतः वक्रः च आसीत् । रात्रेः पूर्वं ग्रामतः प्रत्यागमनं बहु कष्टम् । किन्तु यजमानस्य कार्यं, तत् अवश्यं करणीयम् एव । अतः गोविन्दः 'किं करणीयम् ?' इति चिन्तयन् आसीत् ।

तदा वृद्धः सेवकः उक्तवान् 'गमनकाले एव रात्रिः भविष्यति । रात्रौ सर्पादिजन्तवः सञ्चरन्ति । अतः इदानीं न गच्छतु । कार्यक्रमार्थम् इतोऽपि चतुर्णां दिनानां अवकाशः



अस्ति । श्वः अनारोग्यव्याजेन विरामं स्वीकृत्य ग्रामं गत्वा आगच्छतु । अद्य रात्रौ एव यजमानः पृच्छति चेत् 'गत्वा आगतवान्' इति वदतु ।'

गोविन्दः अपि एतम् उपायम् अङ्गीकृतवान् । रात्रौ यजमानः आगत्य पृष्टवान्— 'गोविन्द ! पार्श्वग्रामं गत्वा आगतवान् वा ?'

'आम्, गत्वा आगतवान्' इति उक्तवान् गोविन्दः ।

यजमानः पुनः पृष्टवान्— 'वार्तां यजमानसमीपे उक्तवान् वा ? अथवा अन्यस्य कस्यचित् समीपे ?'

'भूस्वामी एव गृहे आसीत् । तस्य समीपे एव उक्तवान् ।'

'एतां वार्तां श्रुत्वा भूस्वामी किम् उक्तवान् ?'

'विशेषं किमपि न उक्तवान् । तथैव अस्तु इति अङ्गीकृतवान् ।'

भूस्वामी पुनः पृष्टवान्— 'गोविन्द ! मार्गे नद्यां प्रवाहः आसीत् इति श्रुतवान् अहम् । भवान् कथं गतवान् ?'

गोविन्दः शीघ्रम् एव उक्तवान्- 'श्रीमन् ! अहं बाहुतरणं जानामि किल ? गमनसमये बाहुतरणं कृतवान् । आगमनसमये नौकया आगतवान् ।'

भूस्वामी गोविन्दस्य उत्तरं श्रुत्वा शिरः इतस्ततः चालयति स्म । गोविन्दः चिन्तितवान्— 'मम उत्तरतः यजमानस्य संशयः न उत्पन्नः एव' इति । यजमानः पुनः पृष्टवान्— 'भूस्वामिनः पुत्रेण ह्यः तस्य मातुलगृहतः स्वगृहम् अगन्तव्यम् आसीत् । सः आगतवान् वा ?'

'आम् श्रीमन् ! पुत्रः गृहे एव आसीत् सः कदा प्रत्यागतवान् इति अहं न जानामि' इति गोविन्दः सलीलम् उक्तवान् ।

'अस्तु, तस्य गृहस्य पुरतः एकः आम्रवृक्षः आसीत् । सः वृक्षः इदानीं पुष्पितः वा ?'



गोविन्दः सधैर्यम् उत्तराणि वदन् आसीत् किल? गोविन्दः इदानीं चिन्तितवान्– 'इदानीं वसन्तसमयः। अतः बहुशः वृक्षः पुष्पितः एव स्यात्' इति। अतः गोविन्दः उक्तवान्–'इदमिदानीं किञ्चित् पुष्पितः।'

एकस्य अनन्तरम् अपरम् असत्यं वक्तव्यम् आपतितम् इति कृत्वा, गोविन्दस्य मनसि एव भीतिः। कार्यव्याजेन ततः निर्गन्तुं सः चिन्तितवान्। तदा भूस्वामी तम् आहूय पृष्टवान्– 'गोविन्द! तस्य गृहे कृष्णा गौः अस्वस्था आसीत् किल? सा इदानीं कथम् अस्ति?'

'किं वक्तव्यम्'? इति गोविन्दः झटिति न ज्ञातवान्। 'भूस्वामी गोः चिकित्सां तु करोति एव! एवं चेत् गौः स्वस्था अपि स्यात् एव' इति चिन्तयित्वा गोविन्दः उक्तवान्– 'कृष्णा गौः वा? सा इदानीं स्वस्था एव।'

भूस्वामी गोविन्दस्य परीक्षां कर्तुं इच्छति स्म। अतः सः मन्दं हसन् पृष्टवान्– 'गोविन्द! तत्र भोजनं कृतवान् किल?'

'भोजनं न कृतवान्' इति वदामि चेत् भूस्वामिनः अपमाननं कृतमिव भवति।' इति चिन्तयित्वा गोविन्दः उक्तवान्– 'बहु समीचीनं भोजनं परिवेषितवन्तः, श्रीमन्!' इति।

पदे पदे असत्यम् उक्त्वा व्याकुलः गोविन्दः यजमानं पृष्टवान्– 'अहं गच्छामि वा?'

तीक्ष्णदृष्ट्या गोविन्दस्य मुखे पश्यन् भूस्वामी उक्तवान्- 'अरे गोविन्द! कदा आरभ्य एवम् असत्यं वक्तुम् अभ्यस्तवान्?' इति।

'उक्तम् असत्यं सर्वम् अपि यजमानः ज्ञातवान् एव' इति गोविन्दः आलोचितवान्। अतः सः इदानीं भीत्या कम्पते स्म।

भूस्वामी मन्दं हसन् शान्तस्वरेण उक्तवान्– 'केनापि कारणेन गन्तुं न शक्तं चेत् तथैव वक्तव्यम् आसीत्। भवन्तं श्वः प्रेषयामि स्म। सत्यं वक्तुं भीतः भवान् असत्यम् उक्तवान्। एकस्य असत्यस्य गोपनार्थम् असत्यपरम्परायाः सृष्टिं कृतवान्। इदानीं वस्तुस्थितिं ज्ञातवान् किल?' इति।

गोविन्दः लज्जया कम्पमानः शिरः नमयित्वा तूष्णीं स्थितवान् ।

"अद्य सायंकाले नगरे सः भूस्वामी मिलितवान् । अहं मुहूर्तपरिवर्तनविषये तं निवेदितवान् । किन्तु भवान् 'सः गृहे एव आसीत्' इति असत्यम् उक्तवान् । तदानीम् एव 'भवान् असत्यं वदति' इति अहं ज्ञातवान्। 'नद्यां प्रवाहः अस्ति' इत्यपि असत्यम् उक्तवान् भवान् । वस्तुतः सा नदी शुष्का अस्तीति भवान् न जानाति एव किल ?" इति पृष्टवान् यजमानः ।

'न हि श्रीमन् ! बहुकालतः तस्यां दिशि अहं न गतवान्' इति दीनस्वरेण उक्तवान् गोविन्दः ।

यजमानः उच्चैः हसन् उक्तवान्– 'तस्य पुत्रः इदानीम् अपि गृहं न प्रत्यागतवान् । तस्य गृहस्य पुरतः आम्रवृक्षः अपि नास्ति । केवलम् एकः निम्बवृक्षः अस्ति । एवमेव कृष्णवर्णायाः गोः विषयः अपि कल्पितः एव । तस्य गृहे किदृशी गौः अस्ति इति अहमपि न जानामि' इति । गोविन्दः अवनतं शिरः न उन्नीतवान् एव ।

यजमानः आसन्दतः उत्तिष्ठन् उक्तवान्– 'अस्तु, इतःपरं असत्यं न वदतु, उक्तं असत्यं कदाचित् प्रकाशितं भविष्यति एव इति न विस्मरतु ।'

'क्षाम्यन्तु भवन्तः । अत्रत्यकार्याणां समापने एव विलम्बः सञ्जातः । 'सत्यं वदामि चेत् भवन्तः कुपिताः भवन्ति' इति चिन्तयित्वा अहम् असत्यम् उक्तवान् । इतःपरं जन्मनि कदापि असत्यं न वदामि' इति गोविन्दः नमस्कृत्य उक्तवान् ।

नगरात् आनीतं मधुरं भक्ष्यं गोविन्दस्य हस्ते दत्वा वात्सल्यपूर्णेन स्वरेण यजमानः उक्तवान्– 'अस्तु, एतत् स्वामिन्याः हस्ते ददातु, भवान् अपि किञ्चित् खादतु' इति ।






[पिङ्गलः मातुः द्वारा सहोदरयोः दुराचार सर्वं ज्ञातवान्। किन्तु सहोदरयोः पश्चात्ताप-पूर्वकं रोदनं श्रुत्वा पिङ्गलस्य मनः द्रवितम्। भ्रातृप्रेम्णा तयोः आदरं कृतवान्। कृतघ्नौ सहोदरौ तु पिङ्गलेन आनीतं धनं वशीकर्तुं चिन्तितवन्तौ। पिङ्गलम् एकस्य नाविक-नायकस्य कृते विक्रेतुं इष्टवन्तौ। नाविकनायकेन सह सम्भाषणम् अपि कृतवन्तौ।]

अनुजविषये जीवदत्तेन उक्तं सर्वम् अपि नाविकनायकः सकुतूहलं श्रुतवान्। अनन्तरम् आनन्देन अट्टहासं कृतवान्। तस्य अट्टहासस्य अन्तरार्थम् अजानन् जीवदत्तः लक्षदत्तः च परस्परं मुखं दृष्टवन्तौ।

हासानन्तर नाविकनायकः किञ्चित् आलोच्य जीवदत्तम् उक्तवान्– 'भोः मित्र! एतादृशः युवकः एव मम कृते अपेक्षितः। भवता उक्तं सर्वं सत्यं किल? वस्तुतः पिङ्गल नामकः भवताम् अनुजः, भवन्तं भवतः मातरं च पीडयति वा? मम पुरतः निःसारवचनम् असत्यं वा न वदतु' इति।



इति।

'श्रीमन्! एवं तु न करोतु। सः पुनः गृहम् आगच्छति चेत् अस्माकं दुर्गतिः एव' इति जीवदत्तः उक्तवान्। झटिति लक्षदत्तः अपि उक्तवान्– 'अनुजः तु जन्मना दुष्टः। वर्षत्रयं प्रति-प्रेषयन्ति चेत् पुनरपि पूर्वतनी बुद्धिः अनुवर्तते। सः अस्मान् पुनरपि पीडयति। अतः तस्य दूरे स्थितिः एव वरम्' इति।

'नायक महोदय! अस्माकं वचनं सर्वं सत्यम् एव। दुष्टस्य एतस्य अनुजस्य पीडया वयं खिन्नाः। इतःपरं सोढुम् न शक्यम्। अस्माकं कष्टं देवः एव जानाति' इति उक्तवान् लक्षदत्तः।

नौकानाविकः पुनरपि तीक्ष्णदृष्ट्या पश्यन् उक्तवान्– 'तर्हि भवतः अनुजम् अहं क्रीणामि। तं मम सेवायां नियोजयामि, गर्वभङ्गं च करोमि। यदा सः सज्जनः भवति तदा तं भवतः समीपं प्रेषयिष्यामि। भवतु किल?'

तर्हि दासरूपेण तं विक्रेतुं भवतः माता अपि अङ्गीकरोति वा? विक्रयणानन्तरं पुनः दोषारोपणं क्रियते चेत् कष्टं भवेत्। सर्वं विचिन्त्य निर्णयं स्वीकुर्वन्तु' इति उक्तवान् नाविकनायकः।

जीवदत्तः लक्षदत्तः च किञ्चित् दूरं गत्वा रहसि वार्तालापं कृतवन्तौ। प्रत्यागत्य विनयभावनया जीवदत्तः उक्तवान्– 'आगमनसमये एव वयं मात्रा सह वार्तालापं कृत्वा एव आगतवन्तः। पिङ्गलं दूरं प्रेषयितुं सा इच्छति एव। पुत्रपीडया सा अपि खिन्ना। किन्तु 'पुत्रं दासरूपेण



नयतु' इति स्वयं मुखतः वक्तुं न शक्नोति। अतः वयं केवलं आगतवन्तः। अस्माकं वचसि विश्वासं स्थापयतु' इति।

'तर्हि अस्तु, सायं सूर्यास्तानन्तरं केनापि व्याजेन तम् अत्र आनयन्तु। अवशिष्टं सर्वम् अहं पश्यामि। एतत् स्वीकरोतु तस्य मूल्यम्' इति वदन् नाविकनायकः जीवदत्तस्य हस्ते शतदीनारान् दत्तवान्।

जीवदत्तः तत् न स्वीकुर्वन् उक्तवान् 'तं समुद्रतीरम् आनेतुं न शक्यते एव। तस्मिन् शतशृगालानां तन्त्रं, अशीतिमहिषाणां बलं च अस्ति। अतः भवान् एव अद्य रात्रौ मम गृहम् आगत्य केनापि उपायेन तं नयतु' इति।

जीवदत्त–लक्षदत्तयोः भीतिं दृष्ट्वा हसन् नाविकनायकः उक्तवान्– 'शृगालतन्त्रं महिषशक्तिः च मम पुरतः तृणसमानम्। राक्षसः वा भवतु नाम, तं शृङ्खलया बद्ध्वा अहं मदीये कार्ये नियोजयामि। तदस्तु, अद्य रात्रौ सहचरैः सह अहम् एव भवतां गृहम् आगमिष्यामि। भवन्तः सिद्धाः भवन्तु। अवशिष्टम् अनन्तरं पश्यामः' इति।

'एवं चेत् भवतः उपकारम् आगामिजन्मनि अपि न विस्मरामः' इति उक्तवान् जीवदत्तः। अनन्तरं नाविकनायकेन दत्तान् शतदीनारान् सन्तोषेण स्वीकृत्य लक्षदत्तेन सह ततः निर्गतः।

मार्गे लक्षदत्तः उक्तवान्– 'अग्रज! इदानीं कोऽपि उपायः चिन्तनीयः। रात्रौ नाविकनायकः सहचरैः सह गृहं आगच्छति किल? तदा पिङ्गलस्य मनसि संशयः उत्पन्नः न भवेत्। एतदर्थं किं कुर्मः?' इति।

'चिन्ता मास्तु। उपायम् अहं पूर्वम् एव चिन्तितवान् अस्मि' इति वदन् जीवदत्तः लक्षदत्तस्य कर्णे रहस्यरूपेण उपायं सूचितवान्। उपायं श्रुत्वा सन्तुष्टः लक्षदत्तः हसन् उक्तवान्– 'अग्रज! भवान् तु बृहस्पतिसमः। किन्तु एकः प्रश्नः;-अन्ते पिङ्गलेन आनीते धने मदीयः भागः अल्पः न स्यात् किल?' इति।

'छे छे, भवतः किमर्थम् एतादृशः सन्देहः? अहम् उपायसूचकः इति कृत्वा भागे अधिकं स्वीकरोमि वा? बुद्धौ अहं श्रेष्ठः चेत् बले भवान् एव श्रेष्ठः। अन्यच्च, अहं सहोदरं वञ्चयामि वा?' इति जीवदत्तः उक्तवान्। एवं गायन्तौ हसन्तौ च तौ गृहम् आगतौ। द्वारे पिङ्गलं दृष्ट्वा तयोः मुखभावः एव परिवर्तितः। मुखे कृतकचिन्ता आगता।

एतत् दृष्ट्वा पिङ्गलः पृष्टवान्– 'सहोदर! किमर्थं चिन्ता? किं जातम्?' इति।

जीवदत्तः– 'सहोदर! अवमानम् अतिरिच्य दुःखकरं किमपि नास्ति किल? अद्य मार्गे मम प्राचीनस्नेहितः मिलितः। सः इदानीं नाविकनायकः अस्ति। वाणिज्यनिमित्तं सः अत्र नगरम् आगतवान्। पूर्वं सः बहुवारम् अस्माकं सत्कारं कृतवान् असीत्। वयं तु



कदापि तस्य सत्कारं न कृतवन्तः। अस्माकं किम् अस्ति? वयं तु दरिद्राः' इति खेदेन उक्त्वा रोदनम् आरब्धवान्। लक्षदत्तस्य नेत्रे अपि अश्रूणि आगतानि!

'अग्रज! भवतः स्नेहितः मम अपि स्नेहितः एव। इदानीं वयं न दरिद्राः। भवतः स्नेहितः स्व-सहचरैः सह अवश्यं आगच्छतु। यथा ते आश्चर्यचकिताः भवेयुः तथा भोजन-व्यवस्थां कुर्मः, चिन्ता मास्तु' इति उक्तवान् पिङ्गलः।

'सत्यं वा एतत्?' इति आश्चर्यं प्रकटयन् जीवदत्तः उक्तवान्। 'सत्यम् एव वदामि। स्नेहितम् आनयन्तु। उत्कृष्टं भोजनम् व्यवस्थापयामः' इति पिङ्गलः उक्तवान्।

'तर्हि इदानीम् एव आह्वानम् दत्वा आगच्छामः' इति उक्त्वा जीवदत्तः लक्षदत्तेन सह गतवान्।

सायंकालपर्यन्तं पानमन्दिरे द्यूतगृहे च कालायापनं कृत्वा अनन्तरं नाविकनायकस्य समीपं गतवन्तः। नाविकनायकः स्व-सहचरैः सह जीवदत्तम् अनुसृतवान्।





पिङ्गलः नाविकनायकं तदीय – सहचरान् च हृत्पूर्वकं स्वागती – कृतवान्। मन्त्रस्यूतस्य साहाय्येन विविधानि भक्ष्यभोज्यानि उत्पाद्य अतिथीनां कृते परिवेषितवान्। नाविकनायकः तु एतत्सर्वं जीवदत्तेन लक्षदत्तेन च व्यवस्थापितम् इत्येव चिन्तितवान्।

भोजनानन्तरं सर्वे बहुकालपर्यन्तं जल्पनं कृतवन्तः। 'पिङ्गलः यदा निद्रितः भवति तदा तं बन्धयामि' इति नाविकनायकः चिन्तयति स्म। पिङ्गलः तु उत्साहेन वार्तालापं कुर्वन् एव अस्ति। नाविकनायकस्य असहना पराकाष्ठां गता।

कालयापनं व्यर्थम् इति चिन्तयित्वा नाविकनायकः स्व-सहचरान् जीवदत्तं लक्षदत्तं च संज्ञया सूचितवान्। ते सर्वे झटिति पिङ्गलस्य उपरि पतितवन्तः। रज्जुना तं बन्धितवन्तः। जीवदत्तः पिङ्गलस्य मुखे वस्त्रं स्थापितवान्।

पिङ्गलेन एतत्सर्वम् न निरीक्षितम्। किञ्चित् – कालं सः विमोचनं प्राप्तुं प्रयत्नं कृतवान्। किन्तु सः एकाकी। आक्रमणकाराः तु बहवः।

पिङ्गलः झटिति स्वसेवकं भल्लूककेतुं स्मृतवान्। मन्त्रोच्चारण – समनन्तरम् एव भल्लूककेतुः साहाय्यार्थं प्रत्यक्षः भवति स्म। किन्तु पिङ्गलः प्रयत्नेन अपि मन्त्रं स्मर्तुं न शक्तवान्।

पिङ्गलः मन्त्रं स्मर्तुं पुनः पुनः प्रयत्नं कृतवान्। तथापि असफलः एव। पिङ्गलः इदानीम् असहायः। पार्श्वप्रकोष्ठे निद्रिता माता तु किमपि न ज्ञातवती। नाविकनायकस्य




अनुचराः बन्धितं पिङ्गलम् उन्नीय स्वनायकम् अनुसृतवन्तः ।

जीवदत्तः अपि लक्षदत्तेन सह समुद्रतीर-पर्यन्तं गतवान् । तत्र नाविकनायकम् उक्तवान् "भोः, जागरूकता भवतु । एषः विषसर्पः इव अस्ति । यत्किमपि भवतु, एतं न त्यजतु" इति ।

"विषसर्पस्य मुखं इदानीं बन्धितं अस्ति । तस्य दन्ताः कथं निष्कासनीयाः इत्यपि अहं जानामि । एकवारं कश्चित् मम वशे आगतः चेत् पुनः तस्य मोक्षः एव नास्ति" इति उक्त-वान् नाविकनायकः ।

जीवदत्तः लक्षदत्तः च नाविकनायकस्य कृते पुनः पुनः कृतज्ञतां समर्प्य गृहम् आगतवन्तौ । किमपि अजानन्तौ इव निद्रितवन्तौ । प्रातः-काले उत्थाय मातुः समीपे 'अम्ब ! पिङ्गलः कुत्र' इति कातरस्वरेण पृष्टवन्तौ ।

माता सहजस्वरेण उक्तवती– "किमर्थं कातरता ? सः स्व-प्रकोष्ठे निद्रां करोति । शीघ्रम् एव उत्तिष्ठति" इति ।

"सः प्रकोष्ठे नास्ति । गृहे अपि कुत्रापि नास्ति । भवती किमपि कार्यम् उक्त्वा प्रेषित-वती स्यात् इति चिन्तयित्वा अहं पृष्टवान्" इति उक्तवान् जीवदत्तः ।

एतत् वचनं श्रुत्वा माता भीता इव । सा त्वरया गृहे सर्वत्र अन्वेषण कृतवती । तदा जीवदत्तः उक्तवान्- "अम्ब ! भीतिः मास्तु । ममतु एकः संशयः । रात्रौ सः अतिथिं प्रति– 'मम नौकाप्रयाणं बहु इष्टम्' इति वदति स्म । अतः नाविकनायकेन सह गतवान् स्यात्" इति ।

"एवमेव स्यात्। "दूरे कुत्रचित् द्वीपे एकं दुर्गम् अस्ति। तत्र भूमौ निधिः अस्ति।' इति नाविकनायकः वदति स्म। 'निधिं बहिः आनेतुं मन्त्रतन्त्रादिकम् अहं जानामि' इति पिङ्गलः वदति स्म। अतः नाविकनायकेन सह एव गतवान् स्यात्। भवती गमनं निषेधयति इति कृत्वा सः अनुक्त्वा एव गतवान्" इति उक्तवान् लक्षदत्तः।

सरलस्वभावा माता एतत्सर्वं सत्यम् इत्येव अङ्गीकृतवती। अनन्तरं निराशा सा देवं प्रार्थयन्ती उक्तवती– 'एवमेव स्यात्। किन्तु पिङ्गलः सर्वदा भाग्यशाली एव। न्यायबुद्धिः सद्व्यवहारः च तं सर्वदा रक्षयति। मदीयः वत्सः शीघ्रम् एव आगमिष्यति' इति।

मातुः व्यवहारेण सहोदरयोः कोपः आगतः। जीवदत्तः कोपेन– 'ओ हो हो! सः एकः बुद्धिमान् पुत्रः। वयं तु बुद्धिहीनाः किल? सर्वदा पिङ्गलविषये भवत्याः पक्षपातः एव। इतःपरं वयम् एतस्मिन् गृहे क्षणम् अपि न निवसामः। भवती भवत्याः प्रियपुत्रश्च अत्र निवसतु, पित्रा सम्पाद्य स्थापिता सम्पत्तिः कुत्र अस्ति?' इति वदन् धनार्थम् अन्वेषणम् आरब्धवान्।

माता उक्तवती– 'पित्रार्जितं सर्वं भवन्तौ दुर्व्यसनार्थं व्ययीकृतवन्तौ किल? इदानीं विद्यमानं सर्वम् अपि पिङ्गलेन सम्पादितम्' इति।

एतेन वचनेन जीवदत्तः कुपितः। मातरम् अवाच्यशब्दैः निन्दितवान्। लक्षदत्तः पिङ्गलेन आनीतं धनराशिं मन्त्रस्यूतं च वशीकृतवान्। 'एवं न कुर्वन्तु भोः' इति दैन्येन उक्तवती माता।

(अनुवर्तते)






# श्रावणकथा

'वेतालः कति कथाः जानाति' इति परीक्षां कर्तुम् इव त्रिविक्रमः पुनः वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोपितवान्। मौनं श्मशानमार्गम् अनुसृतवान्। तदा शवे स्थितः वेतालः– 'अये महाराज! अस्मिन् अर्धरात्रे, भयङ्करे श्मशानमार्गे गच्छतः, भवतः श्रमः व्यर्थः अपि स्यात्। तदा यदि कुपितः अपि, तेन किं प्रयोजनम्? 'कृतस्य कार्यस्य फलम् एतत्' इति मत्वा समाधानं प्राप्तव्यम् भवति। श्रावणनामकस्य कवेः गतिः एवम् एव अभवत्। तस्य एव कथां वदामि' इति कथाम् आरब्धवान्।

राजा चन्द्रपालः काम्बोजं परिपालयति स्म। सः दयालुः। तस्य आस्थाने बहवः कवयः,

## वेतालकथा



विद्वांसः च आसन्। प्रतिदिनं सायं तत्र कविगोष्ठी प्रचलति स्म। राजा गोष्ठीरसम् आस्वादयन् सन्तोषम् अनुभवति स्म।

एकदा श्रावणः नाम कविः राजाश्रयं सम्प्रार्थ्य तत्र आगतवान्। चन्द्रपालस्य विषये आशुगीतं रचयित्वा गीतवान्। तत् श्रुत्वा राजा सन्तुष्टः। आस्थाने श्रावणस्य उत्तमम् उद्योगं परिकल्पितवान्।

सायंकाले राजसभायां कवयः काव्यं रचयन्तः गायन्तः परस्परं चर्चां कुर्वन्ति स्म। राजा एतत्सर्वम् उत्साहेन शृणोति स्म। किन्तु किमपि न वदति, न पृच्छति च। नवीनः श्रावणः कवीनां काव्येषु अनेकान् दोषान् ज्ञातवान्। 'प्रथमपरिचये एव खण्डनं दोषप्रदर्शनं वा न उचितम्' इति चिन्तयित्वा श्रावणः तूष्णीम् उपविशति स्म। किन्तु अनन्तरकाले दोषान् ज्ञात्वा अपि मौनं स्थातुं न शक्तवान्। 'प्रतिक्रिया कथं प्रदर्शनीया?' इति सः बहु चिन्तितवान्।

'कवीनां दोषान् ज्ञात्वा अपि राजा चन्द्रपालः तूष्णीम् उपविशति किल? अत्र किं कारणम्?' इति श्रावणस्य चिन्ता। विशालहृदयः चन्द्रपालः पण्डितान् निराश्रयान् कर्तुं न इच्छन् एवं व्यवहरति किम्?

संशयपरिहारार्थं श्रावणः पण्डितानाम् आर्थिक-परिस्थितिं विचारितवान्। द्वित्रान् विना अन्ये सर्वे धनिकाः एव। राजाश्रयं विना अपि ते सर्वे सुखेन जीवितुं समर्थाः। तदा श्रावणः चिन्तितवान्। 'अहम् एव कवीनां गुणदोषाणां विमर्शं कर्तुं न शक्नोमि वा? अथवा चन्द्रपालः एव कवितां शृण्वन् लोपदोषान् ज्ञातुम् असमर्थः वा? कस्य दोषः?'

राजा तु स्वयं न कविः । पण्डितानां चर्चायां स्वयं भागम् अपि न गृह्णाति । केवलं श्रवणेन आनन्दम् अनुभवति । अतः चन्द्रपालस्य काव्यज्ञानम् एव अल्पम्'' इति । एवं स्थिते स्वकाव्यज्ञानस्य प्रदर्शनेन अपि प्रयोजनं नास्ति ।

तन्मध्ये शङ्करानन्दः नाम पण्डितश्रेष्ठः काशीतः स्वदेशं प्रस्थितः, काम्बोजं आगतवान् । 'शङ्करानन्दः एकदिनं काम्बोजे तिष्ठति' इति श्रावणः ज्ञातवान् । श्रावणः शङ्करानन्दस्य समीपं गत्वा स्वकवितां श्रावयित्वा उक्तवान्- "अहम् इदानीं महाराजस्य आस्थाने कविः अस्मि । काव्यक्षेत्रे अभिवृद्धिम् इच्छामि । एतदर्थं मदीयं ज्ञानं पर्याप्तं वा ? इतोऽपि सम्पादनीयं वा? एतद्विषये भवदीयः अमूल्यः अभिप्रायः सूचनीयः'' इति ।

कविः शङ्करानन्दः हसन् उक्तवान्- ''भवान् राजाश्रये अस्ति वा? तर्हि एतत् भवतः भाग्यम् एव। एषः राजाश्रयः भवतः कविताशक्तेः पुरस्कारः न। कविप्रतिभा तु भवतः अस्ति एव। किन्तु प्रयत्नः न पर्याप्तः । यदि भवान् समर्थः कविः भवितुम् इच्छति तर्हि भवता इतोऽपि परिश्रमः करणीयः" इति ।

श्रावणः शङ्करानन्दं नमस्कृत्य कृतज्ञतावचनानि उक्तवान् । अनन्तरं महामन्त्रिणः विशालाक्षस्य समीपं गत्वा उक्तवान्- "श्रीमन्,





मदीयेन किञ्चत्-पाण्डित्येन एव तुष्टः राजा माम् आस्थाने कविः इति नियोजितवान्। एतदर्थम् अहं कृतज्ञः। किन्तु इदानीम् अहं विशेषाध्ययनार्थं काशीं गन्तुम् इच्छामि। कृपया अनुमतिं ददातु'' इति।

मन्त्री श्रावणस्य मुखं परीक्ष्य उक्तवान्— 'भवान् लोकव्यवहारज्ञः, विवेकी च। एवं स्थिते, काशीगमनविषये आश्रयदातारं राजानम् अपृष्ट्वा मां किमर्थं पृच्छति ?' इति।

तदा श्रावणः किञ्चित् हसन् उक्तवान्— "श्रीमन्! एतत् अहं जानामि एव। महाराजस्य आदरं प्रीतिं च विस्मृत्य न व्यवहरामि। अहं तादृशः कृतघ्नः न'' इति।

सः अनन्तरं राजसमीपं गत्वा काशीगमनं निवेदितवान्। महाराजस्य अनुमतिं प्राप्य ततः निर्गतवान्।

एवं कथां समाप्य वेतालः उक्तवान्— 'राजन्! आशुकवितां श्रुत्वा तुष्टः राजा, श्रावणस्य कृते आस्थाने स्थानं दत्तवान्। एवं सुलभतया लब्धं स्थानं त्यक्त्वा श्रावणः निर्गतवान्। तर्हि श्रावणः अविवेकी वा? एवमेव शङ्करानन्दस्य वचनेन श्रावणः सामान्य कविः इति अपि ज्ञायते। मन्त्री विशालाक्षः एतादृशस्य सामान्य-कवेः प्रशंसां किमर्थं कृतवान्? एवं प्रशंसां कुर्वतः विशालाक्षस्य आशयः कः? एतेषां प्रश्नानाम् उत्तरं ज्ञात्वा अपि न वदति चेत् भवतः शिरः सहस्रधा भग्नं भवेत्' इति।

तदा त्रिविक्रमः एवम् उक्तवान्— श्रावणः विवेकी इत्यत्र न सन्देहः। अत्र कथायाम् आलोचनीयम्— 'श्रावणः उत्तमः कविः वा?' इति। 'राजाश्रये यत् स्थानं लब्धं तत् भाग्येन

एव,न तु कवितागुणैः' इति शङ्करानन्दः उक्तवान्। श्रावणः ज्ञानम् अभिवृद्धिं च अपेक्षते। सः गुणदोष-विमर्शकं मार्गदर्शकम् अपेक्षते स्म। राजास्थाने तादृशः कोऽपि न आसीत्। राजातु श्रावणस्य नीरसकवित्वं श्रुत्वा एव सन्तुष्टः भवति। एतादृशे राजास्थाने स्थित्वा श्रावणः उत्तमः कविः भवितुं कदापि न शक्नोति स्म। अतः सः अन्यत्र गन्तुं निश्चितवान्।

'राजा चन्द्रपालः न तथा बुद्धिमान्' इति श्रावणः ज्ञातवान् एव। एवं चेत् राज्यव्यवस्थायां सूत्रधारः मन्त्री विशालाक्षः एव इति श्रावणस्य विचारः। अतः एव सः प्रथमं विशालाक्षं दृष्ट्वा अनुज्ञां प्रार्थितवान्। एतादृश-सूक्ष्मचिन्तकस्य प्रशंसां यदि विशालाक्षः करोति, तर्हि तत्र किम् आश्चर्यम्?

'आश्रयदातारं राजानम् अपृष्ट्वा मां किमर्थम् अनुज्ञां पृच्छति?' इति विशालाक्षस्य प्रश्ने, एका सूचना अपि अस्ति- 'राज्ञः चन्द्रपालस्य अज्ञानं कुत्रापि बहिः न प्रकाशयतु' इति। सूक्ष्मग्राही श्रावणः तत् जानाति एव। अतः सः वदति- 'महाराजस्य आदरं प्रीतिं च कथं विस्मरामि? अहं तादृशः कृतघ्नः न' इति।

राजा चन्द्रपालः अतीव बुद्धिमान् न स्यात्, किन्तु गुणी उदारी च। एतं विषयं विशालाक्षः जानाति, श्रावणः अपि जानाति।'

एवं राज्ञः वचनसमाप्तेः समनन्तरम् एव वेतालः शवसहितः अदृश्यः भूत्वा वृक्षस्य शाखाम् आलम्बितवान्।





# मातङ्गः

विन्ध्यपर्वतस्य प्रान्ते एकः विशालः सरोवरः। सरोवरस्य तटे प्रशान्ते प्रदेशे एकं गुरुकुलम् । गुरुकुलस्य कुलपतिः मातङ्गः नाम पण्डितः। तस्य आश्रमे अनेके विद्यार्थिनः विद्यार्जनाय वसन्ति । तेषु विद्यार्थिषु केचन धनिकानां पुत्राः । केचन निर्धनिकानां पुत्राः । तेषां मध्ये राजसम्बन्धी विरूपः अपि एकः ।

विरूपः बुद्ध्या किञ्चित्-वक्रः। सः सर्वेषां विडम्बनं करोति । सः गुरुकुले सर्वदा नियमान् उल्लङ्घयति । मातङ्गः तस्मिन् समये तं निन्दति । विरूपः तु 'गुरुः मां निन्दति' इति कुपितः भवति। अतः सहपाठिनां समीपे 'पङ्गुः गुरुः' इति गुरोः विडम्बनं करोति । वस्तुतः मातङ्गस्य दक्षिणपादः किञ्चित् ऊनः ।

एकस्मिन् दिने मातङ्गः शिष्याणां पाठस्य समाप्तेः अनन्तरं एकां कथां वक्तुम् आरब्धवान् ।

पञ्चाशत्-वर्षेभ्यः पूर्वं भैरवानन्दः नाम एकः कुलपतिः आसीत् । सः सर्वशास्त्र-पारङ्गतः मन्त्रवेत्ता च। शिष्याणां विद्याभ्याससमाप्तेः अनन्तरं प्रियशिष्याणां कृते मन्त्ररहस्यम् उपदिशति स्म। एवम् उपदिष्टाः ते एव प्रसिद्धाः मन्त्रवेत्तारः भवन्ति स्म ।

भैरवानन्दस्य सुभानुः मातङ्गः इति द्वौ शिष्यौ । तौ शास्त्राभ्यासं समापितवन्तौ । अनन्तरं मन्त्ररहस्य ज्ञातुं तयोः इच्छा जाता। अतः उभौ अपि गुरोः समीपं गत्वा 'मन्त्रम् उपदिशतु' इति प्रार्थितवन्तौ । भैरवानन्दः अङ्गीकृत्य तयोः कृते एकप्रकारं मन्त्रम् एव उपदिष्टवान् । तस्य सिद्धिप्रकारम् अपि निवेदितवान् । अन-

न्तरम् एवम् उक्तवान्—'एतेन मन्त्रेण यथेष्टं रूपं प्राप्तुं शक्यम् । किन्तु मन्त्रस्य केचन नियमाः सन्ति । मन्त्रस्य परीक्षार्थं वा, अल्पकारणार्थं वा मन्त्रस्य उपयोगः न करणीयः । कार्यार्थं यत्र मन्त्रस्य बहु आवश्यकता अस्ति तादृशसमये एव मन्त्रः प्रयोक्तव्यः । अपि च, केनापि कारणेन अङ्गवैकल्यं भवति चेत् तदा मन्त्रः व्यर्थः भवति । अतः जागरूकतया मन्त्रस्य उपयोगः करणीयः ।'



गुरुणा उपदिष्टमन्त्रौ तौ सुभानु—मातङ्गौ गुरुं नमस्कृत्य कमपि उद्योगं प्राप्तुं राजधानीं प्रति प्रस्थितौ । मार्गे एका नदी । तां नदीं तीर्त्वा एव राजधानीं प्रति गन्तव्यम् । नाविकः तु अपरस्मिन् तीरे आसीत् ।

तदा मातङ्गः सुभानुम् एवम् उक्तवान्—'तस्मात् तीरात् यः कोऽपि अत्र आगच्छति चेत् नौका अत्र आगच्छति । तावत्पर्यन्तं समयः व्यर्थः । आवां मन्त्रं जानीवः किल ? तेन मन्त्रेण मत्स्यरूपं धृत्वा नदीं तरावः ।'

'अल्पकार्यार्थं मन्त्रशक्तिः न प्रयोक्तव्या इति गुरोः वचनं विस्मृतं वा ? परीक्षार्थमपि एवं न करणीयम्' इति उक्तवान् सुभानुः ।

तदा मातङ्गः 'नदीतरणम् अल्पकार्यं न । भवान् नौकया एव आगच्छतु । अहं तु मत्स्यरूपेण नदीं तरामि' इति उक्त्वा मत्स्यरूपेण नदीं तीर्त्वा तीरं प्राप्तवान् ।

किञ्चित्-समयानन्तरं सुभानुः नौकया एव नदीं तीर्त्वा मातङ्गेन सह पुनः राजधानीं प्रति प्रस्थितः । पादाभ्याम् एव गमनं बहु कष्टकरम् इति मातङ्गः चिन्तितवान् ।

अतः सः सुभानुं प्रति, "आवां पक्षिणोः रूपं धृत्वा शीघ्रम् एव राजधानीं गच्छावः । पादाभ्यां गमनेन बहु श्रमः" इति उक्तवान् ।

सुभानुः न अङ्गीकृतवान् । "भवान् बहु भीरुः, अविवेकी च" इति सुभानुं भर्त्सयन् मातङ्गः "अहं शीघ्रं गत्वा राजधान्यां

प्रतीक्षां करोमि' इति उक्त्वा पक्षिरूपेण उड्डयितवान् । आकाशमार्गे किञ्चित्-समयम् उड्डीय श्रमपरिहारार्थम् एकस्य वृक्षस्य शाखायाम् उपविष्टवान् । तदा एकः गृध्रः आकाशमार्गे भ्रमन् एनं पक्षिणं दृष्ट्वा पादाभ्यां गृहीत्वा पुनः आकाशे उड्डयितुं प्रवृत्तः ।

मातङ्गः तदा मानुषरूपम् आश्रितवान् । गृध्रः मानुषरूपेण परिणमन्तं पक्षिणं दृष्ट्वा भीत्या तं त्यक्तवान् । मातङ्गः आकाशात् गुल्मप्रदेशे पतितवान् । अतः तस्य प्राणापायः न अभवत् । किन्तु तस्य दक्षिणपादः भग्नः ।

तदा तस्मिन् मार्गे एव आगताः यात्रिकाः मातङ्गं दृष्ट्वा शुश्रूषां कृतवन्तः । कतिपयदिनानाम् अनन्तरं वेदना किञ्चिदिव शान्ता अभवत् । दुःखितः सः गुरोः भैरवानन्दस्य समीपं गत्वा प्रवृत्तं सर्वं वृत्तान्तं निवेदितवान् ।

भैरवानन्दः तं समाश्वास्य पादस्य कृते अनेकप्रकारां चिकित्सां कारितवान् । व्रणः सम्पूर्णतया शान्तः । किन्तु मातङ्गः पादेन ऊनः अभवत् । एतेन अङ्गवैकल्येन पूर्वं गुरुणा उपदिष्टः मन्त्रः व्यर्थः अभवत् । सुभानुः राज्ञः आस्थाने उद्योगं प्राप्य गच्छता कालेन उन्नतस्थानम् अपि प्राप्तवान् ।

गुरुः मातङ्गः कथां समाप्य 'गुरुणा उक्तान् नियमान् उल्लङ्घ्य मातङ्गः पङ्गुः अभवत् । अपि च मन्त्रेण सिद्धा अपूर्वा शक्तिः अपि नष्टा । सः मातङ्गः अहम् एव । गुरोः विषये यस्य गौरवभावना नास्ति सः पण्डितः अपि तिरस्कारार्हः' इति उक्त्वा कुटीरं प्रविष्टवान् ।

कथां श्रुत्वा विरूपः ततःप्रभृति कदापि गुरुकुलस्य नियमान् न उल्लङ्घितवान् । सहपाठिनां समीपे गुरोः विडम्बनम् अपि न कृतवान् ।






# चण्डी

गोविन्दः नाम कश्चित् गृहस्थः आसीत्। सः सरलः साधुस्वभाववान् च। किन्तु तस्य पत्नी राधा धृष्टा चण्डी च। गोविन्दः पत्न्या उक्तं सर्वं शृणोति अनुतिष्ठति च। अतः सा साक्षात् कैकेयी एव अभवत्।

विवाहानन्तरं यदा मातृगृहतः राधा पतिगृहम् आगतवती, तदा गोविन्दः केवलं स्वीयं कार्यं करोति स्म। किन्तु पत्न्याः मोहपाशेन बद्धः सः तदा तदा पत्न्याः कार्ये अपि साहाय्यं करोति स्म। राधा तु तस्य कार्ये साहाय्यलेशम् अपि न कृतवती। प्रत्युत स्वीयानि कार्याणि अपि पत्युः शिरसि एव आरोपितवती। गोविन्दः एव अजाः गाः च चारयेत्, गृहे जलम् अपि पूरयेत्, वस्त्राणि अपि क्षालयेत्, गृहम् अपि सम्मार्जयेत्, चुल्लीम् अपि ज्वालयेत्। गच्छति काले एतत् सर्वं विवाहितस्य मम कर्तव्यम् एव इति गोविन्दः भावितवान्।

एवं सत्यपि राधा पतिं भर्त्सयति स्म। यदि क्षेत्रे कर्षति गोविन्दः, तत्र अपि गत्वा असन्तम् अपि दोषं प्रदर्श्य सा पतिं निन्दति। श्रान्त्या यदि विश्रान्तिं स्वीकरोति, 'अलसः' इति वदति। कार्यं कर्तुं इतस्ततः यदि सः गच्छति, 'केवलं अटति' इति आक्षिपति। यदि पत्न्या सह सम्भाषणं करोति, 'वाचालः' इति गर्हति। यदि तूष्णीं तिष्ठति 'किं भवान् मूकः वा' इति पृच्छति। कार्यं कृतं चेत् किमर्थं कृतम्? इति, अकृतं चेत् किमर्थं न कृतम्? इति च आक्षिपति। एवं पदे पदे पत्युः दोषोद्घाटनं विना तस्याः अन्यत् कार्यं किमपि न आसीत्।

पञ्चविंशति-वर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा।




गोविन्दः तु पत्न्याः भर्त्सनं निन्दनं तर्जनम् आक्षेपं च श्रुत्वापि तूष्णीम् एव कार्यं करोति। किमपि प्रत्युत्तरं न ददाति, दातुं न इच्छति च। प्रतिवेशिनः, मार्गे अटन्तः जनाः च गोविन्दं दृष्ट्वा हसन्ति स्म। तथापि गोविन्दः न कुप्यति। हसतः तान् वदति–'अये! मित्रवर्याः! किमर्थं व्यर्थम् एव द्वात्रिंशत् दन्तान् अपि लोकाय प्रदर्शयन्ति?' इति।

एकदा राधा पतिम् उक्तवती– 'अत्र पश्यतु, क्षीरं विकृतिम् आपन्नम्। कार्ये भवतः अश्रद्धा एव अत्र कारणम्' इति। एतत् श्रुत्वा आश्चर्येण 'क्षीरविकृतेः मम च कः सम्बन्धः?' इति गोविन्दः पृष्टवान्। राधा कोपेन उक्तवती– 'यदि गोः ऊधः सम्यक् क्षालितं भवति, तदा क्षीरं कथं वा विकृतिम् आपद्यते?' इति।

'ऊधः प्रक्षाल्य दोहनं करणीयम् इति भवत्या कदा अपि न उक्तम्' इति गोविन्दः उक्तवान्।

'एतत् अपि किं वक्तव्यम्? हन्त! एतत् करणीयम्, एतत् अकरणीयम् इति प्रतिदिनं सर्वं वक्तुं किं शक्यम्? मूढं भवन्तं यत् अहं परिणीतवती तत् एव मम अपराधः' इति राधा उक्तवती।

'वाचा किं प्रयोजनम्? मया यत् करणीयं तत् सर्वं एकस्मिन् कागदे विलिख्य ददातु। अनन्तरम् अपि यदि प्रमादः भविष्यति तदा मां भर्त्सयतु' इति उक्तवान् गोविन्दः।

राधा एकैकं कार्यं वक्तुम् आरब्धवती। गोविन्दः लेखितुं प्रवृत्तः। हनूमतः पुच्छम् इव कार्याणाम् आवलिः अपि वर्धिता।

कानिचित् दिनानि अतीतानि। मकर-सङ्क्रमणोत्सवः सन्निहितः। गृहं सर्वं स्वच्छीकृतम्। गृहस्य समीपे स्थिते सरोवरे गोविन्दः वस्त्राणि प्रक्षाल्य प्रक्षाल्य, निष्पीड्य च स्थापयति स्म। राधा आतपे रज्जौ वस्त्राणि प्रसारयन्ती पतिं भर्त्सयितुम् आरब्धवती – 'श्वः एव पर्वदिनम्। कार्यं तु पर्वतोपमम् अस्ति। एवं शनैःशनैः यदि कार्यं क्रियते समाप्तिः

कदा ? भवादृशः अलसः मूर्खः च प्रपञ्चे एव कोऽपि नास्ति' इति ।

एवं पतिं भर्त्सयन्ती सा निष्पीडितं वस्त्रं स्वीकर्तुं नतवती । तदा तस्याः दक्षिणपादः शैवालेन आवृतायां शिलायां निहितः । झटिति एव स्खलन्ती भर्त्सनरता सा सरोवरे पतिता ।

'जले निमज्जन्ती म्रियमाणा अस्मि, माम् उद्धरतु, माम् उद्धरतु' इति सा उच्चैः आक्रोशनं कृतवती । 'सरोवरः आगाधः नास्ति । कण्ठ-पर्यन्तम् एव जलम् अस्ति । भयं मास्तु' इति शनैः उत्तरं:दत्तवान् गोविन्दः। 'अहो ! जलूकाः सर्वं रक्तं पिबन्ति । शीघ्रं माम् उद्धरतु' इति उच्चैः स्वरेण पुनः पुनः आक्रोशनं कृतवती ।

भवतीं उद्धर्तुं मम अवकाशः नास्ति । कागदे लिखितानि कार्याणि बहूनि सन्ति । तानि समापनीयानि । कार्याणाम् अवलौ तु एतत् कार्यं नास्ति एव । यदि संशयः अस्ति कागदम् आनीय आवलिं पठामि । श्रृणोतु' इति उक्त्वा गोविन्दः कागदम् गृहतः आनीय पठितुम् आरब्धवान् ।

शैत्यात् ज़लूकेभ्यः च भीता सा कम्पमाना दीनस्वरेण उक्तवती– 'पत्नी मृता भवतु इति भवान् इच्छति वा ? इतःपरं तत् कागदं कार्या-वलिः इत्यादिकं सर्वं मास्तु । तत् सर्वं एतस्मिन् सरोवरे एव क्षिपतु । भवतः पादौ गृह्णामि । कृपया माम् उद्धरतु' ।

'एवं पुनः पुनः वदतु । भवतु, इतःपरं भवदीयं कार्यं भवती एव करोतु । केवलं मदीयं कार्यम् अहं करोमि । एतत् भवती अनुमन्यते वा ?' इति पृष्टवान् गोविन्दः ।

'तथास्तु' इति झटिति एव उत्तरं दत्तवती राधा । अनन्तरं गोविन्दः पत्नीं सरोवरतः उद्धृतवान्, गृहस्य अन्तः नीतवान् च । ततः-परं स्वीयं कार्यं कुर्वती राधा कदापि पतिं न भर्त्सितवती । न वा निन्दितवती ।





# मानवजन्म

पूर्वं ब्रह्मदत्तः काशीराज्यं परिपालयति स्म। तस्मिन् काले बोधिसत्वः मगधराज्ये निर्धनिक-रूपेण जन्म प्राप्तवान् । सः राजपरिवारे सेवकः भूत्वा जीवनं यापयति स्म ।

मागधदेशस्य पार्श्वे अङ्गदेशः अस्ति । तयोः मध्ये चम्पानदी प्रवहति । नद्याः तले नागराज्यम् आसीत् । नागराज्ये चाम्पेयः राजा आसीत् ।

सामान्यतः अङ्ग–मगधदेशयोः मध्ये वैरं सर्वदा अस्ति एव । अतः तदा तदा युद्धम् अपि प्रचलति । एतादृशे एकस्मिन् युद्धे मगध-राजः पराजितः । सः अश्वम् आरुह्य युद्ध-रङ्गात् पलायितः । मार्गे चम्पानदी दृष्टा । 'शत्रुहस्ते मरणापेक्षया आत्महत्या एव वरम्' इति चिन्तयित्वा सः अश्वेन सह नदीम् उत्पतित-वान् । अश्वः तु साक्षात् नागराज्यं प्रविश्य चाम्पेयस्य सभास्थानम् एव प्रविष्टवान् ।

नागराजः चाम्पेयः झटिति आसनतः उत्थितवान् । आदरपूर्वकं मगधराजस्य सत्कारम् कृतवान् । मगधराजस्य सर्वं वृत्तान्तम् अपि श्रुतवान् ।

'प्रवृत्तस्य विषये चिन्ता मास्तु। अङ्गराजेन सह युद्धे अहं भवतः साहाय्यं करोमि । भवतः एव जयः यथा स्यात् तथा करोमि ।' इति वचनं दत्तवान् चाम्पेयः ।

पुनः युद्धं प्रवृत्तम् । स्ववचनानुसारं चाम्पेयः मगधराजस्य साहाय्यं कृतवान् । अङ्गराजः रणा-ङ्गणे एव मृतः । मगधराजः उभयोः राज्ययोः अपि अधिपतिः अभवत् ।



एतन्निमित्तं चाम्पेयस्य मगधराजस्य च मैत्री गाढा जाता। मगधराजः प्रतिवर्षम् अपि सपरिवारः चम्पानदीतीरं गच्छति स्म। तद्दिने चाम्पेयः उपरि आगच्छति स्म। मगधराजेन दत्तानि धनकनकादीनि उपायनानि अतिथिसत्कारं च स्वीकरोति स्म। एतत् दृश्यं अतिमनोहरं दृश्यते स्म।

बोधिसत्वः मगधराजस्य सेवकः आसीत् किल ? सः प्रतिवर्षम् अपि चाम्पेयस्य वैभवं पश्यन् आसीत्। मरणसमये अपि तस्य मनसि चाम्पेयस्य अतुल-वैभवस्य एव चिन्ता। अतः अपरजन्मनि सः बोधिसत्वः सर्पाणां कुले जन्म प्राप्तवान्। अनन्तरं सः एव नागानां राजा अपि अभवत्।

पूर्वजन्मसु बोधिसत्वस्य शरीराणि सुन्दराणि आसन्। अस्मिन् जन्मनि असुन्दरं सर्पशरीरम् ! अतः बोधिसत्वः जुगुप्सितः। 'मया वराकेण अविचार्य नागराजस्य ऐश्वर्यविषये आशा प्रदर्शिता। अतः मया एतादृशी दुर्गतिः प्राप्ता।' इति सः पश्चात्तापम् अनुभूतवान्।

'आत्महत्यया एतत् जन्म समापयामि' इति चिन्तयित्वा सः आत्महत्यार्थं सिद्धः। तदा तत्र सुमना नाम नागकन्यका सखीभिः सह आगत्य प्रणामं कृतवती।

सुमनां दृष्ट्वा नागराजस्य जीविते आशा पल्लविता। आत्महत्याविचारं त्यक्त्वा सः सुमनां परिणीतवान्। पुनः नागलोकं गत्वा राज्यपालनं कर्तुम् आरब्धवान्।

'एतत् शरीरम् अशाश्वतम्। अतः मया व्रतोपवासादिभिः पुण्यं सम्पादनीयम्। तदर्थम् अहं गुप्तरूपेण मानवानां लोकं गच्छामि' इति सः कदाचित् निश्चितवान्।

एतदनुसारम् उपवासदिनेषु सः मानवलोकम् आगच्छति स्म। राजमार्गपार्श्वे वल्मीकस्य उपरि पतित्वा 'मां गरुडः नयतु। अहितुण्डिकः वा मां गृह्णातु। मम शरीरेण यस्य कस्यपि प्रयोजनम् भवतु' इति चिन्तयति स्म।



किन्तु प्रवृत्तम् अन्यत् एव। वल्मीकस्य उपरि शान्तं स्थितं सर्पं जनाः दृष्टवन्तः। जनाः क्षीर-पुष्प-चन्दनादिभिः पूजयितुम् आरब्धवन्तः। एतावत् एव न, समीपग्रामवासिनः सर्वे मिलित्वा एकं मन्दिरम् अपि निर्मितवन्तः। प्रतिदिनम् अपि सहस्रशः जनाः तत्र आगत्य, आरोग्यभाग्यं, पुत्रसौभाग्यं, व्याधिनिवारणम् इत्यादिकं प्रार्थयन्ति स्म।

केषाञ्चित् प्रार्थना फलिता। एतेन सर्वत्र प्रचारः अपि अधिकः जातः। नागराजस्य उपवासदिनानि एवम् एव गतानि। प्रतिमासं कृष्णपक्षस्य प्रथमातिथ्यां केवलं सः गृहं गच्छति स्म।

पत्नी सुमना पत्युः भूलोकगमनवार्तां ज्ञातवती। सा एकदा पतिं पृष्टवती– 'आर्य! तदा तदा भूलोकगमनं न उचितम्। सः लोकः अपायकारी। तत्र कदा किं भवति इति वक्तुं न शक्यते। कदाचित् भवताम् आपत् आगता चेत् वयं कथं जानीमः?' इति।

नागराजः सुमनाम् एकस्य सरोवरस्य समीपं नीतवान्। सरोवरं प्रदर्श्य उक्तवान्– 'अत्र पश्यतु, मम किमपि व्रणादिकं जातं चेत् एतस्य सरोवरस्य जलं मलिनं भविष्यति। गरुडः मां नयति चेत् जलं सर्वं शुष्कं भविष्यति। कदाचित् मान्त्रिकः अहितुण्डिकः वा मां नयति चेत् जलं रक्तमयं भविष्यति। एतेन भवती सर्वदा मम योगक्षेमं ज्ञातुं शक्नोति' इति।

काशीनगरवासी कश्चित् तक्षशिलां गत्वा महता श्रमेण वशीकरणविद्यां पठित्वा, स्वदेशम् आगच्छन् आसीत्। सः मार्गपार्श्वे सुप्तं नागराजं दृष्टवान्।

सः युवकः मन्त्रबलेन सर्पं बद्ध्वा कण्डोले स्थापितवान्। तं सर्पं ग्रामं नीतवान्। तत्र सर्पक्रीडायाः प्रदर्शनं कृतवान्। युवकस्य इच्छानुसारं नागराजेन क्रीडनीयम् आपतितम्।

नागराजस्य क्रीडां द्रष्टु ग्रामस्थाः मिलिताः। चित्रविचित्रां क्रीडां दृष्ट्वा सर्वे जनाः सन्तुष्टाः। ते सर्वे ब्राह्मण-युवकाय धनम् अमूल्यवस्तूनि च दत्तवन्तः ।

'अस्मिन् कुग्रामे एव एतावत् सम्पादनं चेत् नगरे बहु धनं अवश्यं मिलेत् एव। अतः अहं अद्य एव नगरं गच्छामि।' इति ब्राह्मणः चिन्तितवान्। अनन्तरं सः नागराजं स्वीकृत्य एकमासाभ्यन्तरे नगरं प्राप्तवान् ।

एकमासपर्यन्तं नागराजः उपवासं एव कृतवान्। ब्राह्मणेन दत्तम् आहारं न स्वीकृतवान् एव।

'अहम् आहारं स्वीकरोमि चेत् पुनः एतद्युवकतः मम मोक्षः एव न भविष्यति' इति नागराजः चिन्तितवान् ।

ब्राह्मणयुवकः काशीनगरसमीपे ग्रामेषु नागराजस्य क्रीडां प्रदर्श्य यथेष्टं धनं सम्पादितवान् ।

नागराजस्य क्रीडाविनोदान् काशीराजः अपि श्रुतवान्। सः ब्राह्मणयुवकम् आस्थानम् आहूतवान्। क्रीडायाः प्रदर्शनार्थं व्यवस्थां कृतवान् ।

अत्र नागलोके एकमासपर्यन्तम् अपि नागराजस्य अनागमनं ज्ञात्वा सुमना भीता। 'पत्युः किं कष्टं जातम्' इति ज्ञातुं सा सरोवरसमीपं गतवती। सरोवरे जलं रक्तवर्णं



दृश्यते स्म। कोऽपि अहितुण्डिकः पतिं बद्धवान्' इति सा ज्ञातवती। अतः सा पतिम् अन्वेष्टुं प्रस्थिता। तत्र तत्र जनान् पृष्ट्वा पृष्ट्वा सा काशीनगरं प्राप्तवती।

सा काशीनगरे ब्राह्मणसमीपे क्रीडन्तं स्वपतिं दृष्टवती। राजा प्रजाः च सन्तोषेण क्रीडां पश्यन्तः आसन्। अकस्मात् आगतां पत्नीं दृष्ट्वा नागराजः लज्जितः। सः झटिति कण्डोलं प्रविष्टवान्।

तदा सुमना मानवरूपं धृत्वा राजानं नमस्कृत्य प्रार्थितवती–'महाप्रभो !मम कृते पतिभिक्षां ददातु' इति।

तावति काले, नागरूपेण स्थितः नागराजः सुन्दरस्य नवयुवकस्य रूपं धृत्वा स्थितवान्। एतत् दृष्ट्वा जनाः सर्वे आश्चर्यचकिताः।

काशीराजः रमणीये दम्पती दृष्ट्वा सन्तुष्टः। एकसप्ताहपर्यन्तं तयोः सत्कारं कृतवान्। अनन्तरं परिवारसहितः ताभ्यां सह नागलोकम् अपि गतवान्। नागलोकस्य ऐश्वर्यं वैभवं च दृष्ट्वा काशीराजः अतीव सन्तुष्टः। तस्य आश्चर्यस्य तु सीमा एव नास्ति।

'नागलोके एतादृशं वैभवं अस्ति। एतत्सर्वं त्यक्त्वा भवान् किमर्थं भूलोके वल्मीकस्य उपरि निवसति स्म ?' इति काशीराजः नागराजं पृष्टवान्।

'महाराज ! अत्र नागलोके यथेष्टं वैभवम् अस्ति, सत्यम्। किन्तु मोक्षः प्राप्तव्यः चेत् मानवलोकः एव शरणम्' इति नागराजः उक्तवान्।

एतत् श्रुत्वा काशीराजः अतीव सन्तुष्टः। 'भवतः परिचयतः अहम् अस्माकं लोकस्य माहात्म्यं ज्ञातवान्' इति सः उक्तवान्। नागराजः यथेष्टां सम्पत्तिं दत्वा काशीराजं सम्मानितवान्।






# कृष्णकुमारी

राजस्थाने उदयपुरसंस्थानं महाराणानां शासनसमये सकलसमृद्ध्या ख्यातम् आसीत्। महाराण-भीमसिंहस्य परिपालनेन तु उदयपुरसंस्थानं यथेष्टं अभिवृद्धिं प्राप्तम्।

एतस्मिन् राज्ये महाराणस्य पुत्री कृष्णकुमारी, सौन्दर्यस्य खनी आसीत्। तस्याः सौन्दर्यं दृष्ट्वा जनाः तां 'राजस्थानस्य कुसुमम्' इति वदन्ति स्म। तस्याः मधुरं वचनम मृदुव्यवहारः च सर्वान् अपि सन्तोषयति स्म।





जयपुरपालकः जगत्सिंहः एतां युवराज्ञीं परिणेतुं चिन्तितवान्। एतदर्थम् एकं दूतं महाराणसमीपं प्रेषितवान्। महाराणः 'शीघ्रम् एव निर्णयं सूचयामि' इति उक्तवान्। पुत्र्याः विवाहविषये पत्न्या सह मन्त्रिभिः सह च विचार्य निश्चयं स्वीकर्तुं इच्छति स्म सः।



एतावति काले जगत्सिहस्य मारवाड-पालकस्य मानसिंहस्य च मध्ये युद्धम् आरब्धम् । युद्धे जगत्सिंहः पराजितः इति मानसिंहः प्रकटितवान् । किन्तु जगत्सिंहः पराजयं न अङ्गीकृतवान् । एतेन कारणेन तयोः मध्ये वैरम् समुत्पन्नम् ।

युद्धानन्तरं मानसिंहस्य प्रतिनिधिः उदयपुर-महाराणस्य समीपम् आगत्य उक्तवान्—'अस्माकं राजा मानसिंहः युवराज्ञीं कृष्णकुमारीं परिणेतुम् इच्छति । युद्धे जितवतः अस्माकं महाराजस्य कृते भवता पुत्रीं दातुं सन्तोषेण अङ्गीकुर्वन्ति इति विश्वसिमः' इति ।





एतेन महाराणः सङ्कटे पतितः । जगत्सिंहः अपि प्रबलः । मानसिंहः अपि बलवान् एव । एकस्य कृते पुत्री दत्ता चेत् अपरः उदयपुरस्य शत्रुः भविष्यति । किन्तु उदयपुरम् इदानीं शत्रोः सम्मुखीकरणे न समर्थम् ।

मानसिंहस्य अमीरखानः नाम स्नेहितः आसीत्। सः सर्वदा 'उदयपुरस्य युवराज्ञीं परिणयतु' इति प्रेरयति स्म। एतेन प्रोत्साहितः मानसिंहः उदयपुरस्य महाराणं विवाहविषये अनुरोधं कर्तुम् आरब्धवान्।





अन्ते मानसिंहपरतया अमीरखान् स्वयं महाराण-समीपं गत्वा सूचनां उक्तवान्– 'मानसिंहेन सह भवतः पुत्र्याः विवाहः न भवति चेत् उदयपुरं वयं नाशयामः। अथवा पुत्रीं स्वयं वा मारयतु, किन्तु जगत्सिंहस्य कृते सा न दातव्या एव' इति।

मातापित्रोः सङ्कटपरिस्थितिं ज्ञात्वा कृष्णकुमारी अतीव खिन्ना। स्वनिमित्तम् उदयपुरस्य नाशं सा न इच्छति स्म। अत्र तस्याः कोऽपि अपराधः न आसीत्। तथापि मातापितरौ इदानीं तया सह वार्तालापं त्यक्तवन्तौ।





अनन्तरं अल्पे एव काले जगत्सिंहः मानसिंहः च युवराज्ञीं परिणेतुम् इच्छन्तौ उदयपुरस्य उपरि आक्रमणं कृतवन्तौ । नगरे सर्वत्र भीतिः उत्पन्ना । राजा तत्परिवारश्च किङ्कर्तव्यतामूढः अभवत् ।

एकदा युवराज्ञी सुप्ता आसीत् । तदा अन्धकारे कश्चित् खड्गं स्वीकृत्य मारयितुम् आगतवान् । एतत् दृष्ट्वा सा चीत्कारं कृतवती । तदानीम् आगन्तुकः खड्गं क्षिप्त्वा गतवान् । स च आगन्तुकः महाराणस्य बन्धुः जवानदासः एव आसीत् ।






युवराज्ञी ज्ञातवती यत्—'स्वमरणेन एव नगरस्य विपत्तिः दूरं गच्छति । अतः एव ज्येष्ठाः मां मारयितुं जवानदासः नियोजितवन्तः' इति । अतः सा तत्क्षणे एव विषम् आ नेतुं सखीम् आज्ञापितवती । विषादपूर्णं मन्दहासं प्रकटयन्ती विषं पीतवती । स्वपरिवारस्य नगरस्य च रक्षणार्थं स्वप्राणान् एव आहुतिं कृतवती ।



# अविवेकः

बस्रा-नगरे अब्दुल्रजाकः नाम महान् व्यापारी आसीत् । तस्य यमलौ पुत्रौ स्तः । एकदा अब्दुल्रजाकः व्यापारं कर्तुं बहूनि वस्तूनि स्वीकृत्य नौकया प्रयाणं कृतवान् । बहुकालानन्तरम् एकं द्वीपं प्राप्तवान् ।

तस्य समीपे अत्युत्कृष्टवस्तूनि आसन् । अतः व्यापारः सम्यक् अभवत् । महान् लाभः अपि प्राप्तः । रजाकस्य पण्यवस्तूनि दृष्ट्वा द्वीपस्य राजा बहु सन्तुष्टः । सः स्वयं नौकायाः समीपम् आगत्य बहूनि अमूल्य-वस्तूनि क्रीतवान् ।

'रजाकः समुद्रव्यापारे निष्णातः । सः व्यापारार्थं बहूनि द्वीपानि अटितवान्' इति राजा ज्ञातवान् । अतः सः रजाकं सादरं राजगृहम् आहूय वैभवोपेतम् आतिथ्यं दत्तवान् । अनन्तरं रजाकतः अनेकानां द्वीपानां विशेषविचारान् श्रुतवान् । 'रजाकः अनुभवी । रजाकतः बहु विषयाः ज्ञातव्याः' इति चिन्तयित्वा राजा – 'भवान् अत्रैव किञ्चित् कालं तिष्ठतु' इति बहु आग्रहं कृतवान् । रजाकः अङ्गीकृतवान् । तत्र एव स्थितवान् च ।

एवम् एव न केवलं मासाः, अनेकानि वर्षाणि अपि अतीतानि । रजाकस्य पत्नी 'बहुकालः अतीतः । पतिः न आगतवान्' इति चिन्ताकुला अभवत् । अन्ते अतीवव्याकुला सा पुत्राभ्यां सह रजाकेन यदुक्तं तदेव द्वीपम् अनुसृत्य गन्तुम् आरब्धवती ।

कानिचित् दिनानि अतीतानि । एतेषां नौका अपि एकं नौकानिस्थानं प्राप्तवती । रजाकः यत्र आसीत्, तस्मात् द्वीपात् एका नौका आगच्छन्ती अस्ति इति पत्नी ज्ञातवती । सा पुत्रद्वयम् आहूय 'नाविकान् विचार्य पितुः समाचारं सङ्गृह्णातु' इति उक्तवती ।



तौ यमलौ तस्याः नौकायाः समीप गतवन्तौ । सा नौका साक्षात् पितुः नौका एव आसीत् । रजाकः महाराजस्य अनुज्ञां सम्पाद्य अमूल्यैः उपायनैः सह स्वदेशं प्रतिनिवृत्तः आसीत् । तौ यमलौ यदा नौकां प्रविष्टवन्तौ तदा रजाकः स्वकीयं विनष्टं धनस्यूतम् अन्विष्यमाणः आसीत् । वस्तुतः नाविकः एव धनस्यूतम् अपहृतवान् आसीत् । किन्तु सः आत्मानं गोपयितुम् इच्छति स्म । अतः सः तदा एव आगच्छन्तौ यमलौ दर्शयित्वा, 'एतौ एव धनस्यूतम् अपहृतवन्तौ। अहं साक्षात् दृष्टवान्' इति उक्तवान् ।

अत्यन्तं कुपितः रजाकः तौ बालौ स्वकीय· पुत्रौ इति अज्ञात्वा 'एतौ समुद्रे क्षिपन्तु' इति नाविकान् आज्ञप्तवान्। ते नाविकाः तत्-क्षणम् एव तौ बालौ समुद्रजले क्षिप्तवन्तः ।

रजाकस्य पत्नी नौकां गतवन्तौ पुत्रौ न आगतवन्तौ इति चिन्तयन्ती एव रात्रिं यापितवती । प्रातःकाले स्वयमेव नौकां गतवती । रजाकः आकस्मिकतया तत्र पत्नीं दृष्ट्वा अतीव आनन्दितः अभवत् । किन्तु पुत्रयोः विषयं ज्ञात्वा सः अतीव खिन्नः । रजाकः स्वकीयम् अपराधं ज्ञात्वा शिरोघट्टनपूर्वकम् अरुदत् ।

तथापि 'यदा कदा वा पुत्रद्वयम् अपि आगच्छेत्' इति काचित् आशा तयोः मनसि आसीत् । अतः एव समुद्रप्रान्ते सर्वत्र अन्वेषणं कृतवन्तौ। अनन्तरं तौ रिक्तहस्तेन गृहम् आगतवन्तौ च। क्रमेण सा आशा अपि क्षीणा ।

एवम् एव कालचक्रं परिवर्तितम् । रजाकदम्पती 'दत्तकरूपेण एकं बालकं स्वीकुर्वः' इति निश्चयं कृतवन्तौ । एकस्मिन् दिने रजाकः विपणितः एकं बालकं क्रीत्वा गृहम् आगतवान् । पत्नीं तं बालकं दृष्ट्वा 'हन्त! अस्य 'परिचयः न लब्धः वा? एषः न अन्यः ! अस्माकम् एव पुत्रः ! एषः एव कनिष्ठः । बहुकालतः भवान् एतं न दृष्टवान् किल? अतः परिचयः न लब्धः ।'' इति उक्त्वा

सा बालकम् आलिङ्गितवती । बालकः अपि मातरं दृष्ट्वा सन्तोषेण 'अम्ब !' इति उद्गारं कृतवान् । रजाकस्य असीमः आनन्दः अभवत् । सः कनिष्ठं पुत्रम् आलिङ्ग्य 'भवतः अग्रजस्य का वार्ता ?' इति पृष्टवान् । सः 'अहं अग्रजस्य विषयं न जानामि । समुद्रे पतितं मां तु कश्चन नाविकः संरक्ष्य कस्यचन भृत्यविक्रयव्यापारिणः कृते विक्रीतवान्' इति उक्तवान् ।



एवम् एव षण्मासाः अतीताः । पितापुत्रौ मिलित्वा पुनः कानिचन पण्यवस्तूनि सङ्गृह्य व्यापारार्थम् नौकया एकं द्वीपं प्राप्तवन्तौ । कनिष्ठः पुत्रः तस्य द्वीपस्य महाराजाय दातुं कानिचन वस्तूनि गृहीत्वा राजभवनं गतवान् ।

सः राजा तानि उपायनानि दृष्ट्वा अतीव सन्तुष्टः। 'किञ्चित्-कालं मम अतिथिः भूत्वा तिष्ठतु ।' इति आग्रहं कृतवान् । एवं तयोः मध्ये स्नेहः वर्धितः । एतत् दृष्ट्वा राजपरिवारे केषाञ्चित् मनसि असूया उत्पन्ना। यथाकथञ्चित् तस्य कनिष्ठपुत्रस्य कामपि हानिं कर्तुं ते तन्त्रं कुर्वन्ति स्म । एकस्मिन् दिने सायंकाले महाराजं कश्चित् रोगः सम्प्राप्तः । कनिष्ठस्य मनसि एव चिन्ता समुद्भूता। ''राजगृहे केचन दुष्टाः अवकाशं प्रतीक्षमाणाः सन्ति । राजा इदानीं अस्वस्थः । एषः एव समयः इति कृत्वा ते महाराजस्य हननम् अपि कुर्युः । अतः अहं जागरूकः भवामि' इति संशयग्रस्तः सः खड्गं गृहीत्वा प्रातःकालपर्यन्तं महाराजस्य रक्षणं कृतवान् । प्रातःकाले महाराजस्य स्वास्थ्यं किञ्चित् उत्तमम् अभवत् ।

प्रातः ते दुष्टबुद्धयः सर्वे मिलित्वा महाराजस्य समीपम् आगत्य तं कनिष्ठं दर्शयित्वा 'महाराज ! एषः वणिक्पुत्रः रात्रौ खड्गं गृहीत्वा भवतः शयनगृहम् आगतवान् । अस्मान् दृष्ट्वा तूष्णीं स्थितवान् । नो चेत् भवन्तं मारयति स्म । अतः एव एतं दुष्टं शूलम् आरोपयतु ! सः एव समीचीनः दण्डः एतस्य' इति उक्तवन्तः ।

राजा किञ्चित्कालं चिन्तयित्वा 'अविवेकः बहु अनर्थाय भविष्यति' इति अहं जानामि। एनं प्रथमं कारागृहं प्रेषयन्तु। अनन्तरं किं कर्तव्यम् इति अहं वदामि।' इति उक्तवान्।

रजाकः अपि वार्तां ज्ञातवान्। सः महाराजस्य समीपम् आगत्य 'प्रभो! मम पुत्रः अपराधी वा न वा इति सम्यक् विचारयतु। त्वरया किञ्चिदपि न करणीयम्। तत् महान्तम् अनर्थम् उत्पादयति। अहम् एकम् अविवेकं कृत्वा यावज्जीवं दुःखम् अनुभवन् अस्मि। मया कृतस्य पापस्य परिहारः एव नास्ति' इति उक्तवान्। एतत् श्रुत्वा राजा 'कम् अपराधं कृतवान् भवान्?' इति पृष्टवान्।

"किं वदामि प्रभो! श्रुते अपि मम वचसि विश्वासः न भवति। साक्षात् मम द्वौ पुत्रौ, मया एव जले पातितौ" इति स्वकीयां कथाम् उक्तवान्।

राजा तत् श्रुत्वा "अहो! तर्हि कारागृहे निक्षिप्तः युवकः मम अनुजः एव। अहो मम सौभाग्यम्! अनुजः इति अज्ञाते अपि मम मनसि अभिमानः समुद्भूतः!" इति उक्त्वा पितरं गाढम् आलिङ्गितवान्।

ज्येष्ठः पुत्रः अपि जीवितः अस्ति इति ज्ञात्वा रजाकस्य आनन्दस्य सीमा एव न आसीत्। राजा अपि तत्क्षणमेव अनुजस्य बन्धविमोचनं कृतवान्।

एषः च संवृत्तः समाचारः— समुद्रे पतितः ज्येष्ठः कुमारः एकस्य काष्ठदण्डस्य साहाय्येन जले तरणं कृत्वा एतत् द्वीपम् प्राप्तवान्। द्वीपस्य राजा तु वृद्धः सन्तानहीनः च आसीत्। सः एनं दत्तकरूपेण स्वीकृतवान्। वृद्धराजस्य मरणानन्तरं एषः एव राजा अभवत्।

एवं तेषां जीवनं सुखान्तम् अभवत्। तस्मिन् एव द्वीपे रजाकः पत्नीपुत्रैः सह बहुकालं सानन्दं जीवनं यापितवान्।





# अनुभवः

एकस्मिन् ग्रामे गुरुप्रसादः नाम युवकः आसीत् ! सः समीपस्थे नगरे रामलालश्रेष्ठिनः आपणे लिपिकः आसीत्। गुरुप्रसादस्य मासिक-वेतनं द्विशतं रूप्यकाणि । बाल्ये एव तस्य माता पिता च दिवंगतौ। अतः पितृव्या मीनाक्षी एव तं पोषितवती, वर्धितवती च । मीनाक्ष्याः एका पुत्री आसीत् । युक्ते वयसि पुत्र्याः विवाहं कृत्वा मीनाक्षी गुरुप्रसादस्य गृहे एव आसीत् ।

गुरुप्रसादः सुन्दरः न आसीत् । वेतनम् अपि अधिकं न। तथापि रूपवत्या 'लावण्या'नामिकया सह तस्य विवाहः सञ्जातः । लावण्यायाः पिता अतीवदरिद्रः असीत् ।

विवाहतः पूर्वं लावण्या स्वप्नं पश्यन्ती आसीत्। ''मम सौन्दर्येण व्यामुग्धः कश्चित् धनिकपुत्रः मां परिणेष्यति' इति। अतः गुरुप्रसादेन सह विवाहं सा न इच्छति स्म। गुरुप्रसादस्य पितृव्या अधिकां वरदक्षिणां पृच्छतु, तेन च विवाह-सम्बन्धः छिन्नः भवतु' इति सा प्रति-दिनं देवं प्रार्थयति स्म ।

किन्तु मीनाक्षी उक्तवती– 'वरदक्षिणा, आभरणं वा मास्तु एव। शुभसमये विरस जनकान् एतान् अंशान् विस्मरामः वयम्' इति ।

एतत् श्रुत्वा लावण्या हताशा। किन्तु तस्याः मातापितरौ बहु सन्तुष्टौ । एवं लाव-ण्यायाः इच्छायाः विरोधं गुरुप्रसादेन सह



पत्युः उत्तरेण कुपिता लावण्या उक्तवती– 'भवतां वेतनं तु अस्माकं उदरपोषणार्थम् एव न पर्याप्तम्। किं भवन्तः महावणिजः? द्विशतरूप्यकाणि विंशतिदिनेषु एव समाप्तानि भविष्यन्ति। सर्वेषां कृते भोजनं दातुं किम् एषा धर्मशाला वा?'

पार्श्वप्रकोष्ठे सुप्ता मीनाक्षी जलं पातुम् उत्थिता आसीत्। सा लावण्यायाः वचनं श्रुतवती। अतः प्रातः उत्थाय कारणं किमपि अनुक्त्वा, पुत्रीगृहं प्रस्थितवती। गुरुप्रसादः मनसि खिन्नः। किन्तु पत्न्याः वचनात् भीतः तूष्णीं स्थितवान्।

गुरुप्रसादः पितृव्यां शकटम् आरोप्य तस्याः पुत्रीगृहं नीतवान्। ततः विलम्बेन नगरं प्राप्तवान्। अतः अधिकसमयपर्यन्तम् आपणे कार्यं करणीयम् आपतितम्।

नगरतः ग्रामं प्राप्तुं राजमार्गं विना समीपतरः मार्गः अपि आसीत्। शीघ्रं गृहं प्राप्तव्यम् इति आलोचयन् गुरुप्रसादः समीपतरं निर्जनमार्गम् एव अनुसृतवान्। मार्गमध्ये अरण्यम् अपि आसीत्। अरण्यप्राप्तिसमये रात्रिः जाता। किन्तु तद्दिने पूर्णिमा। सर्वत्र कौमुदी व्याप्ता आसीत्।

विवाहः सञ्जातः। एतेन कारणेन पतिगृहम् आगता लावण्या मीनाक्षीं शत्रुम् इव पश्यति स्म।

एकमासाभ्यन्तरे एव एकदा लावण्या पतिम् उक्तवती– 'एषु दिनेषु निजश्वश्रूम् एव काऽपि न सेवते। भवन्तः तु दूरबन्धोःएतस्याः सेवायां मां नियोजितवन्तः। भवतां पितृव्या स्वपुत्र्याः गृहं गच्छतु। एतस्याः सेवा तु मया कर्तुं न शक्यते' इति।

पत्न्याः वचनेन खिन्नः गुरुप्रसादः उक्तवान्– कीदृशं वचनम् वदति? पितृव्या तु गृहे एव ज्येष्ठा। अस्याः उपस्थित्या अस्माकम् अनुकूलम् एव किल!'

गुरुप्रसादः एकस्य वृक्षस्य अधः गच्छन् आसीत् । तदा तत्र पर्णेषु शब्दः श्रुतः–

"कः भवान्, कः भवान् ?
पुरतः आगच्छतु ।
अपेक्षितं प्राप्नोतु ।"

आश्चर्यचकितः गुरुप्रसादः उपरि दृष्टवान् । सः एकः जम्बूवृक्षः आसीत् । गुरुप्रसादः उक्तवान्– 'जम्बूवृक्षः किं वा ददाति ? जम्बूफलम् एव किल ?' इति ।



अपरस्मिन् क्षणे एकं जम्बूफलं पादयोः समीपे पतितम् । गुरुप्रसादः फलं स्वीकृत्य स्यूते स्थापितवान् । अग्रे गतवान् च ।

किञ्चित् दूरगमनानन्तरं पुनः पर्णानां मध्यतः कठोरध्वनिः श्रुतः– 'कः भवान्? अहं किं ददामि ?'

एषः कपित्थवृक्षः इति गुरुप्रसादः ज्ञातवान् । अतः सः उक्तवान्– 'कपित्थवृक्षः किं वा दद्यात् ? कपित्थफलम् एव किल ?' इति ।

सद्यः एव एकं कपित्थफलम् पादपार्श्वे पतितम् । गुरुप्रसादः तत् फलम् अपि स्यूते स्थापितवान् । किञ्चित्-दूरगमनानन्तरं पुनः अन्यः शब्दः श्रुतः– 'ददामि भोः ! अपेक्षितं ददामि, स्वीकरोतु भवान्' इति।

सः आम्रवृक्षः । अतः गुरुप्रसादः उक्तवान्– 'आम्रवृक्षः आम्रफलं विना अन्यत् किं दद्यात् ?' इति । तदा तस्य पादसमीपे आम्रफलम् एकं पतितम् । गुरुप्रसादः तत् अपि स्यूते स्थापितवान् । शीघ्रं एव गृहं प्राप्तवान् ।

लावण्या स्यूते स्थितानि फलानि दृष्ट्वा आश्चर्यचकिता । सा पतिं पृष्टवती– 'अकाले एतानि फलानि कथं लब्धानि ?'



गुरुप्रसादः समग्रं वृत्तान्तं पत्नीं निवेदितवान्। तत् श्रुत्वा लावण्या कोपेन उक्तवती– कीदृशाः मूर्खाः भवन्तः। वृक्षाः एव स्वयं सम्भाषणं कुर्वन्ति वा? प्रायः परोपकारिणा पिशाचेन वनदेवतया वा भवद्भिः सह वार्तालापः कृतः स्यात्। श्वः अपि विलम्बेन तेन एव मार्गेण आगच्छन्तु। किं प्रार्थनीयम् इति अहं प्रातः सूचयामि' इति।

लावण्या समग्ररात्रौ 'पिशाचानां समीपे किं प्रार्थनीयम्?' इति अलोचनां कृतवती। प्रातः स्वकीयम् उपायं पतिं निवेदितवती।

अपरस्मिन् दिने गुरुप्रसादः नगरतः विलम्बेन एव अरण्यमार्गेण प्रस्थितवान्। यदा जम्बूवृक्षसमीपम् आगतवान् तदा वृष्टिः आरब्धा। पर्णानां कलरवानन्तरं तस्मिन् दिने अपि ध्वनिः श्रुतः।

पत्न्याः वचनम् स्मरन् गुरुप्रसादः उक्तवान् 'जम्बूवृक्षः मां सुन्दरं करोति चेत् अहं सन्तुष्टः भवामि' इति। तदा वृक्षतः एका जलधारा गुरुप्रसादस्य उपरि पतिता। विद्युतः प्रकाशे स्वशरीरं स्वर्णवर्णतया परिवर्तितं दृष्टवान् गुरुप्रसादः। सः परमानन्दं प्राप्तवान्।

गुरुप्रसादः अग्रे गतवान्। तावति काले कर्णकठोरशब्दं कुर्वन् अशनिः पतितः। जम्बूवृक्षः क्षणे एव भस्मीभूतः।

कपित्थवृक्षस्य समीपं गत्वा गुरुप्रसादः पृष्टवान्– 'अपरिमितम् ऐश्वर्यं लब्धं चेत् समीचीनं भविष्यति' इति।

तदा तस्य पादपार्श्वे एकः स्यूतः पतितः। गुरुप्रसादः स्यूतम् उद्घाट्य गृहीतवान्। तदा खन्खन् इति सशब्दं स्वर्णमुद्राः स्यूते पतिताः। काञ्चनमुद्राः भूमौ अपि पतिताः। गुरुप्रसादः ताः अपि स्वीकृत्य स्यूते स्थापयित्वा अग्रे गतवान्।

यदा सः आम्रवृक्षसमीपं गतवान्, तदा अशनिपापेन कपित्थवृक्षः अपि दग्धः।

गुरुप्रसादः आम्रवृक्षम् उक्तवान्– 'आम्रवृक्षः मम उपरि भाग्यमुद्राम् अङ्कयति चेत् अहं भाग्यशाली भवेयम्' इति।

सद्यः एव गुरुप्रसादस्य शिरसि किमपि पतितम्। किन्तु किं पतितम् इति सः न ज्ञातवान्। तथैव किञ्चित् अग्रे गतवान्। तदा आम्रवृक्षः अपि अशनिपातेन भूमौ पतितः।

गुरुप्रसादः गृहं प्रस्थितः। वृष्टिकारणतः सुवर्णभारकारणतः च गमनं कष्टकरम् आसीत्। एतन्मध्ये मार्गे स्खलितः सः पङ्कमये गर्ते पतितवान्। सुवर्णस्यूतः अपि पङ्के पतितः। क्रमशः गुरुप्रसादस्य शरीरं कण्ठपर्यन्तं पङ्के निमग्नम्। इतःपरं मरणं निश्चितम् इति गुरुप्रसादः चिन्तितवान्।

आम्रवृक्षेण भाग्यम् अनुगृहीतं किल? पार्श्वस्थवृक्षस्य एका शाखा वायुना पङ्के पतिता। गुरुप्रसादः तस्याः आधारेण पङ्कतः बहिः आगतवान्।

गुरुप्रसादः यथाकथञ्चित् उषःकाले गृहं प्राप्तवान्। गृहस्य पुरतः एव मूर्च्छया पतितवान्। मूर्च्छितं पतिं दृष्ट्वा लावण्या



किंकर्तव्यतामूढा जाता। मार्गदर्शनं कर्तुं गृहे अनुभवी कोऽपि नास्ति! भाग्यवशात् लावण्या मीनाक्षीं स्मृतवती। ताम् आनेतुम् एकं प्रेषितवती।

मध्याह्नसमये मीनाक्षी रुदती आगतवती। मीनाक्ष्याः शुश्रूषया एकमासाभ्यन्तरे गुरुप्रसादः स्वस्थः अभवत्। किन्तु अरण्ये प्राप्तां सुवर्णवर्णतां विना अन्यत् किमपि इदानीं नास्ति। गुरुप्रसादस्य शरीरे तत्र तत्र व्रणस्य चिह्नानि दृश्यन्ते।

समग्रवृत्तान्तं श्रुत्वा मीनाक्षी लावण्याम् उक्तवती— 'भवती प्रथमपिशाचं सौन्दर्यं प्रष्टुम् उक्तवती। सौन्दर्यापेक्षया स्वास्थ्यं प्रधानम् इति भवती न ज्ञातवती। द्वितीयपिशाचेन दत्ताः सुवर्णमुद्राः अपि नष्टाः। तृतीयपिशाचेन अनुगृहीतेन भाग्येन एव गुरुप्रसादः रक्षितः' इति।

'तदा विवेकं बोधयितुम् अत्र 'अनुभवी कोऽपि न आसीत्। अतः अहम् अनुचितं प्रार्थयितुं सूचितवती। कष्टं च दत्तवती। इदानीं विवेकः उत्पन्नः' इति दुःखेन उक्तवती लावण्या।

'इदानीम् अपि समयः न अतिक्रान्तः। परिश्रमेण गुरुप्रसादः उन्नतिं प्राप्तुं शक्नोति एव। यतः भाग्यं अस्माकं पक्षे अस्ति। भाग्येन ऐश्वर्यं लभ्यते। सुखमपि सिद्ध्यति' इति उक्त्वा मीनाक्षी गन्तुं सिद्धा।

अश्रुमार्जनं कुर्वती लावण्या उक्तवती— 'अम्ब! मदीयां मूर्खतां क्षाम्यतु। भवती कुत्रापि न गच्छतु। भवत्याः मार्गदर्शनं विना आवाम् अननुभविनौ कथं जीवावः?' इति।

लावण्यायां सञ्जातं परिवर्तनं दृष्ट्वा मीनाक्षी सन्तुष्टा। गुरुप्रसादः अपि आश्चर्यचकितः सन्तुष्टः च।





# विस्मरणशीलः

प्राचीनकाले आत्रेयपुरे पङ्कजनाभः नाम धनिकः आसीत्। तस्य सेवकः गिरीशः। सः बहु विस्मरणशीलः आसीत्। किन्तु सः कर्मशीलः। निन्दितः अपि कुपितः न भवति। अतः प्रमादे कृते अपि धनिकः तं क्षाम्यति।

एकस्यां रात्रौ धनिकः उदरवेदनया पीडितः अभवत्। सः गिरीशम् आहूय–'वैद्यस्य शेषाचार्यस्य गृहं गत्वा, उदरवेदनायाः औषधं आनयतु' इति उक्त्वा प्रेषितवान्। गिरीशः वैद्यस्य गृहं गत्वा पञ्चदशनिमेषेषु औषधम् आनीतवान्। धनिकः औषधं सेवितवान्। तथापि उदरवेदना न शान्ता, न न्यूना च। प्रातःकालपर्यन्तम् उदरवेदनया सः निद्राम् अपि न कृतवान्।

परस्मिन् दिने वैद्यः शेषाचार्यः धनिकस्य गृहम् आगतवान्। 'शिरोवेदना शान्ता वा'? इति पृष्टवान्।

धनिकः कोपेन उक्तवान्–'मम शिरोवेदना इति कः उक्तवान्? उदरवेदनायाः औषधम् आनेतुं गिरीशं प्रेषितवान्। भवान् शिरोवेदनार्थम् औषधं दत्वा प्रेषितवान् वा! अहो उदरवेदनया मम प्राणाः निर्गताः एव इति रात्रौ अहं चिन्तितवान्'। वैद्यः शेषाचार्यः आश्चर्येण उक्तवान्– 'अये! भवान् उदरवेदना इति वदति! गिरीशः आगत्य भवन्तं शिरोवेदना बाधते इत्युक्तवान्। अतः अहं शिरोवेदनायाः औषधं प्रेषितवान्।'

गिरीशः एव अपराधं कृतवान् इति धनिकः कुपितः। गतरात्रौ अनुभूताम् उदरवेदनां स्मृत्वा तस्य कोपः वर्धितः च।

भामहः

धनिकः कोपेन गिरीशं निन्दन्– 'मूर्ख ! समग्रा रात्रिः उदरवेदनया निद्रां विना यापिता। अत्र भवान् एव कारणम् । अथवा मम एव अत्र दोषः । अहं विस्मरणशीलं भवन्तं मम गृहे सेवकत्वेन नियोजितवान् किल ? इतःपरम् एकं क्षणम् अपि मा तिष्ठतु' इति उक्तवान् । गिरीशस्य वेतनादिव्यवहारं सर्वं समाप्य प्रेषितवान् च।

परस्मिन् दिने यथापूर्वं गिरीशः धनिकस्य गृहे कार्यं कर्तुम् आरब्धवान् । धनिकः कोपेन पृष्टवान्– 'गिरीश! ह्यः एव उक्तवान्, इतःपरं भवान् मम गृहस्य कर्मकरः न इति । अद्य पुनः किमर्थम् आगतवान्' ?'

'हन्त! सर्वं विस्मृतम् । अतः एव पुनः आगतम् । क्षम्यताम्, इदानीम् एव गच्छामि' इति गिरीशः उक्तवान् ।

अनन्तरं धनग्रन्थिं समर्पयन् गिरीशः उक्तवान्– 'एतत् धनं पेटिकायां स्थापयितुं ह्यः दत्तम् इति मन्ये । विस्मृत्य अहं नीतवान् क्षम्यताम्' इति । अनन्तरं पूर्वदिने वेतनरूपेण दत्तं धनं धनिकस्य पुरतः स्थापयित्वा सः गतवान् एव ।

गिरीशस्य अद्भुतं विस्मरणं दृष्ट्वा धनिकस्य हृदयं दयया आर्द्रम् अभवत् । सः गिरीशम् आहूय उक्तवान् 'रे! बुद्धिहीन! तत् धनं भवदीयम् एव। ह्यः भवदीयं सर्वं व्यवहारं समाप्य अन्तिमं वेतनं दत्तवान् । तदेव एतत्। स्वीकृत्य गच्छतु ।'

'आम् ! इदानीं स्मृतवान्। एतत् मम धनम् एव' । इति उक्त्वा गिरीशः तत् धनं स्वीकृत्य प्रस्थितवान् ।

'रे गिरीश ! तिष्ठतु । अन्यत्र कुत्रापि मागच्छतु । यथापूर्वं मम गृहे एव कर्म करोतु' इति धनिकः उक्तवान् ।

परस्मिन् दिने विस्मरणरोगस्य औषधम् अस्ति चेत् तत् आनेतुम् अन्यं सेवकं वैद्यालयं प्रति धनिकः प्रेषितवान् ।





# विष्णुकथा

श्रीरामस्य अभिषेकः वैभवेन अभवत्। अनन्तरं रामः सोदराणां सहकारेण, न्यायमार्गेण राज्यं पालयन् आसीत्।

एकस्मिन् दिने एकः ग्रामीण-ब्राह्मणः अयोध्याम् आगतवान्। तस्य हस्ते स्वपुत्रस्य मृतशरीरम् आसीत्। ब्राह्मणः राजद्वारसमीपम् आगतवान्। पञ्चवर्षीयस्य पुत्रस्य शवं तत्र स्थापयित्वा ''रामस्य शासने दोषः अस्ति। अतः एव मम पुत्रः अकालमरणं प्राप्तवान्'' इति पुनः पुनः वदन् रोदनं कृतवान्।

एतं विषयं रामः ज्ञातवान्। सः मन्त्रिभिः वसिष्ठादिभिः सह मन्त्रालोचनं कृतवान्। ब्राह्मणबालकस्य अकालमरणे कारणं किम् इति विचारितवान्। तदा नारदः तस्य कारणम् उक्तवान् 'शम्बुकः इति कश्चन शूद्रः घोरतपः आचरन् अस्ति। तत् युगधर्मविरुद्धम्। अतः एव अकालमरणम् अभवत्'' इति।

रामः लक्ष्मणम् उक्तवान्- ''शीघ्रं गच्छतु। तस्य ब्राह्मणस्य सान्त्वनं करोतु। बालकस्य शरीरं तैलभाण्डे सुरक्षितं स्थापयतु' इति। अनन्तरं रामः पुष्पकविमानम् आरुह्य प्रस्थितवान्। पूर्व-पश्चिमोत्तरदिक्षु सञ्चारं कृतवान्। अन्ते दक्षिणदिशि एकं सरोवरं दृष्टवान्। तत्र शम्बुकः अधोमुखः सन् तपोमग्नः आसीत्। रामः तस्य समीपं गतवान्।



खड्गेन शम्बुकस्य शिरच्छेदं कृतवान् । तदा शम्बुकस्य छिन्न शिरः आनन्देन एवं वदति- "भोः राम ! सर्वेषाम् अपि प्राणिनां मरणं निश्चितम् एव । मम मरणे तु भवान् केवल निमित्तमात्रम् । यद्यपि भवान् समस्तजनानां राजा अस्ति, तथाऽपि भवान् प्रजानां सेवकः । प्रजानां दुःखनिवारण प्रजावत्सलस्य भवतः कर्तव्यम् । यदा अहं धर्मविरुद्धं कार्यं कृतवान् तदा भवान् एव स्वयं मां दण्डयितुम् आगतवान् किल ! एतदेव आदर्शराजस्य लक्षणम् । अहं तु अपराधी । अकार्यं कृतवान् अस्मि । मां क्षाम्यतु । मयि कृपां प्रदर्शयतु । भवतः अनुग्रहेण मां विष्णुसायुज्यं प्रापयतु" इति ।

कपिला शम्बुकस्य पत्नी । सा रामम् उक्तवती– 'भोः राम ! इतःपरं भवतः बहुकठोरपरीक्षाः भविष्यन्ति । तदर्थम् एतत् नान्दी इति चिन्तयतु । सर्वदा दृढमनस्कः भूत्वा कर्तव्यपालनं करोतु । अहं मम पत्या सह ससन्तोषं गच्छामि' इति । सा पत्युः चितां प्रविष्टवती ।

रामः ततः प्रस्थितवान्। मार्गे एकः वृक्षः । वृक्षे एकः कोटरः । सः वस्तुतः कस्यचन उलूकस्य कोटरः । किन्तु कश्चन गृध्रः दुराक्रमणं कृत्वा उलूकं ततः निष्कासितवान् आसीत् । एतं विषयं रामः ज्ञातवान् । सः गृध्रं दण्डयितुं चिन्तितवान् । गृध्रस्य शिरसः स्पर्शनं कृतवान् । तदा गृध्रः अदृश्यः अभवत् । तत्स्थाने एकः राजा प्रत्यक्षम् अभवत् । सः रामम् उक्तवान्– 'अहं ब्रह्मदत्तनामकः राजा । अहं शापग्रस्तः आसम् । भवतः अनुग्रहेण मम शापविमोचनं अभवत्' इति । सः रामं नमस्कृत्य गतवान् ।

रामः अयोध्याम् आगत्य पश्यति, ब्राह्मणबालकः जीवितः अस्ति ।

एकदा विश्वामित्रः रामस्य सभास्थानम् आगतवान् । सः रामम् आज्ञप्तवान्– 'शकुन्तः इति एकः राजा अस्ति । सः मम अवमानं कृतवान् । भवान् तस्य वधं करोतु । एषा गुरोः आज्ञा' इति ।

रामः शकुन्तराजस्य वधं कर्तुं प्रस्थितवान् ।



शकुन्तराजः अञ्जनादेव्याः समीपं गतवान् । अञ्जनादेवी आञ्जनेयस्य माता । सा शकुन्तराजस्य कृते अभयप्रदानं कृतवती । तस्याः आज्ञां पुरस्कृत्य आञ्जनेयः शकुन्तराजं रक्षयितुं सिद्धः । रामः युद्धार्थम् आगतवान् । आञ्जनेयः तस्य पुरतः सधैर्यं स्थितवान् । रामः बाणप्रयोगं कृतवान् । किन्तु सर्वे अपि बाणाः आञ्जनेयस्य वक्षस्थले विलीनाः ।

विश्वामित्रः एतत् सर्वं दृष्टवान् । तस्य मनः परिवर्तितम् । सः दुराग्रहं त्यक्तवान् । शकुन्तराजं आशिषा अनुगृह्य गतवान् ।

अन्यत् एकं दिनम् । मध्यरात्रिसमयः । कश्चन शुनकः राजद्वारे स्थित्वा आक्रोशति— 'अहं न्यायम् इच्छामि' इति । एतत् श्रुत्वा रामः बहिः आगत्य, व्रणितं शुनकं प्रीत्या सान्त्वयति ।

शुनकः स्व-वृत्तान्तं सर्वं निवेदयति । 'गतजन्मनि अहं कस्यचन देवालयस्य अर्चकः आसम् । तदा मया पापम् आचरितम् । अतः एव शुनकजन्म प्राप्तवान् । अद्य एकः पुरुषः मां विनाकारणं ताडितवान् । सः दण्डनीयः । तं देवालयस्य अर्चकस्थाने नियोजयतु । तदेव तस्य उचितं दण्डनम्' इति । रामः तत् अङ्गीकृतवान् । सन्तुष्टः शुनकः ततः प्रस्थितः ।

अन्यत् एकं गृहम् । गृहस्य यजमानः एकदिने स्व-पत्नीं तर्जयति— 'भवती परपुरुषगृहे स्थितवती । परपुरुषगृहे स्थितां पत्नीं पुनः स्वीकर्तुम् अहं रामः न' इति । रामः एतां वार्ताम् ज्ञातवान् ।

सः एतम् अपवादं सोढुम् असमर्थः । सः लक्ष्मणम् आज्ञप्तवान्-''लक्ष्मण ! सीताम् अरण्ये त्यक्त्वा आगच्छतु'' इति । परन्तु लक्ष्मणः एतत् न अङ्गीकरोति । तदा रामः पुनः उक्तवान् ''अहं राजा अस्मि । राजा सर्वदा प्रजानां सेवकः । मम प्रजाः एव मम देवाः । अतः प्रजानाम् अभिप्रायः मया पुरस्करणीयः । प्रजापालने स्वार्थस्य अवकाशः एव नास्ति । प्रजानां सन्तृप्त्यर्थम् अहं सीतां त्यजामि । भवान् मम आज्ञां पालयतु'' इति ।



इदानीं लक्ष्मणः अङ्गीकृतवान् । सः सीतायाः समीपं गत्वा उक्तवान्- "प्रजावति ! भवती मुनीनाम् आश्रमं द्रष्टुम् इच्छति किल ? इदानीं गच्छामः" इति। सीता सन्तोषेण अङ्गीकृतवती । लक्ष्मणः तां रथे उपवेश्य घोरम् अरण्यं नीतवान् । तत्र तां विसृज्य अतीव दुःखेन प्रत्यागतवान् ।

अरण्ये वाल्मीकिमहर्षिः सीतां दृष्टवान् । सः ताम् आश्रमं नीतवान् । आश्रमे सीता लवकुशयोः जन्म दत्तवती ।

एकदा अयोध्यानगरे अनावृष्टिः आगता। जलेन विना जनजीवनम् एव कष्टमयम् अभवत् । तदा रामस्य गुरवः रामम् उक्तवन्तः- "अश्वमेधयागं करोतु, वृष्टिः भविष्यति" इति । रामः यागार्थं सिद्धः । सः सीतायाः स्वर्णमयप्रतिमां निर्मापयति । यागार्थं दीक्षितः भवति ।

कुश-लवौ अयोध्याम् आगतवन्तौ । तौ वाल्मीकिमहर्षिणा रचितं रामयणकाव्यं गीतवन्तौ। तेन रामः बहु सन्तुष्टः । सः कुशलवौ मुनिबालकौ इति चिन्तयति । तयोः कृते उपायनादिकं दत्वा प्रेषयति ।

अनन्तरं लवकुशौ रामस्य अश्वमेधयागस्य अश्वस्य बन्धनं कृतवन्तौ ।

भरतः लक्ष्मणः शत्रुघ्नः इत्यादयः अश्वस्य रक्षणार्थम् आगतवन्तः । तैः सह लवकुशौ युद्धं कृतवन्तौ । युद्धे भरतादयः सर्वे अपि पराजिताः। ते मूर्छिताः । अन्ते रामः एव युद्धं कृतवान् । युद्धे कुशलवौ मातुः नाम्निशपथं कृत्वा बाणप्रयोगं कृतवन्तौ । रामः मूर्छितः । तदा सीता तत्र आगतवती । सर्वेषां शुश्रूषां कृतवती । सर्वे अपि स्वस्थाः अभवन् ।

वाल्मीकिः रामं सर्वं विषयम् उक्तवान् । लवकुशौ सीतां च अर्पितवान् । रामः सीतया सह सिंहासनम् आरूढवान् । सः लवकुशयोः यौवराज्य-अभिषेकम् अपि कृतवान् ।

'लवकुशौ रामं प्राप्तवन्तौ' इति सीता बहु सन्तुष्टा । सा प्रजानां पुरतः आगच्छति । भूमिं पश्यन्ती एवं वदति- "भोः मातः ! रघुवंशदीपकौ मम पुत्रौ स्वपितरं प्राप्तवन्तौ । मया कर्तव्यं सर्वं कृतम् । इतःपरम् अहं जीवितुं



न इच्छामि : अतः मां भवती अन्तः स्वीकरोतु'' इति ।

तदा भूकम्पः अभवत् । भूमिः द्वेधा विभक्ता। भागद्वयस्य मध्ये रत्नसिंहासने भूदेवी उपविष्टा आसीत् । सा उत्थाय बहिः आगतवती । सीतां गृहीत्वा भूम्याः अन्तः गतवती । तदा पुष्पवृष्टिः अभवत् । भूमिः पुनः पूर्ववत् अभवत् । जनाः सर्वे विस्मयेन मूकाः अभवन् ।

एतत् सर्वं दृष्ट्वा रामः बहु कुपितः । सः कोदण्डधनुः गृहीत्वा भूमिं नाशयितुं सिद्धः । तदा अशरीरवाणी श्रुता– 'भोः राम ! शान्तः भवतु । भूमिः सीतायाः माता । सीता मातृसमीपं गतवती । अतः भवान् चिन्तां न करोतु । स्व-कर्तव्यं स्मरतु'' इति ।

अनन्तरं रामः बहुकालपर्यन्तं राज्यं परिपालयन् आसीत् । एकदा यमधर्मः ब्राह्मणवेशं धृत्वा रामसमीपम् आगतवान् । सः उक्तवान्- ''भोः रामचन्द्र ! अहं देवरहस्य वक्तुम् आगतवान् । वयम् एकान्तस्थले उपविश्य सम्भाषणं कुर्मः । लक्ष्मणः द्वारपालनं करोतु । आवयोः सम्भाषणसमये, मध्ये प्रवेष्टुं कस्यापि अवकाशः न दातव्यः । अवकाशः दत्तः चेत् लक्ष्मणस्य मरणदण्डनं दातव्यम्'' इति । रामः अङ्गीकृतवान्। लक्ष्मणः द्वारे स्थितवान् । एतयोः सम्भाषणम् आरब्धम् । यमधर्मः स्व-निजरूपं धृत्वा रामम् उक्तवान् – ''भो ! श्रीरामचन्द्र, रामावतारे भवता यत् कार्यं करणीयम् आसीत्, तत् सर्वं कृतम् । अतः भवान् शीघ्रं वैकुण्ठलोकं गच्छतु । तत्र लक्ष्मीः भवतः प्रतीक्षायाम् अस्ति'' इति ।

तस्मिन् एव समये दुर्वासाः अयोध्याम् आगच्छति । सः लक्ष्मणम् उक्तवान् – ''अहं रामम् इदानीम् एव द्रष्टुम् इच्छामि । तदर्थं अवकाशं कल्पयतु । नो चेत् अहं 'रघुवंशः एव निर्वंशः भवतु, इति शपामि' इति । निरुपायः लक्ष्मणः तस्य कृते अन्तः गन्तुम् अवकाशं कल्पयति । अनन्तरं स्वयं सरयूनदीं गच्छति । नदीं प्रविश्य अदृश्यः अभवत् ।

अयोध्यायां रामः लवकुशयोः राज्याभिषेकं कृतवान्। राज्यपालनं व्यवस्थितम्। एवं सति एकदा श्रावणमासः आरब्धः। सरयूनद्यां पूर्ण-प्रवाहः। पूर्णिमादिने चन्द्रग्रहणपर्वकालः अपि आसीत्। रामः सरयूनदीं गन्तुं प्रस्थि-तवान्। तस्य पार्श्वद्वये भरतशत्रघ्नौ अयोध्यायाः सर्वाः प्रजाः अपि आसन्।

रामः नदीजलं प्रविष्टवान्। अन्ये सर्वे अपि तथैव कृतवन्तः। ग्रहणविमुक्तः चन्द्रः आकाशे विराजते स्म। आकाशतः पुष्पवृष्टिः अभवत्। सुमधुरवीणाध्वनिः सर्वदिक्षु अपि प्रसृता।

क्षीरसागरे लक्ष्मणः आदिशेषरूपं धृत्वा सिद्धः आसीत्। सीता लक्ष्मीरूपेण महाविष्णोः प्रतीक्षायाम् आसीत्। रामः विष्णुरूपं धृत्वा शेषतल्पे अर्धशायितः अभवत्। भरतशत्रुघ्नौ शङ्खचक्ररूपेण तस्य हस्तम् अलङ्कृतवन्तौ। लक्ष्मीः तस्य पादसेवनं करोति।

विष्णोः दश अवतारेषु रामावतारः अत्यन्तं विशिष्टः। रामः आदर्शमानवः। सः पितृवाक्य-परिपालनार्थं वनवासम् आचरितवान्। वानराणां सङ्घटनं कृत्वा सेतुबन्धनं कृतवान्। लोक-कण्टकस्य रावणस्य संहारं कृतवान्। एकपत्नी-



व्रतस्थः भूत्वा आदर्शं परिपालितवान्। राम-राज्यस्य कीर्तिः लोके सर्वदा तिष्ठति।

अतः श्रीरामः पुरुषोत्तमः इति सर्वे वदन्ति। रामस्य जीवनं सर्वदा, सर्वेषां कृते प्रेरणादायकम् अस्ति। अत्यन्तकष्टसन्दर्भेषु अपि कथं धैर्येण कार्यं करणीयम् इति रामः लोकस्य जनानां कृते प्रदर्शितवान्।

एवं सूतपुराणिकः शौनकादीन् रामावतारस्य कथाम् उक्तवान्। अनन्तरं कृष्णावतारस्य कथां वक्तुम् आरब्धवान्।

दानवाः सर्वे अपि शिवभक्ताः। विष्णुः पुनः पुनः दानवसंहारं करोति। अतः शिवः कुपितः- "मम भक्तान् विष्णुः सर्वदा मारयति" इति।

कुपितस्य शिवस्य नेत्रतः एकः राक्षसः उत्पन्नः। तस्य आकृतिः भीकरा आसीत्। शरीरे सहस्रकवचाः आसन्। अतः एव तस्य नाम सहस्रकवचः इति। तस्य देहे अजेयप्रभाव-शक्ति-कुण्डलानि अपि आसन्। जननसमनन्तरम् एव सः भीकरस्वरेण गर्जनं कृत्वा उक्तवान्— "अहं सामान्यराक्षसः न, अपि तु रुद्रांशसम्भूतः। सः विष्णुः मम कृते किं कर्तुं शक्नोति ?"। तस्य अटाटोपेन लोकत्रयम् अपि कम्पितम्। मानवाः सर्वे अपि भीताः।

तदा विष्णुः नर-नारायणरूपेण अवतारं कृतवान्। सहस्रकवचः बहु पराक्रमी। तं जेतुं बहुशक्तिः आवश्यकी आसीत्। अतः तादृशीं शक्तिं सम्पादयितुं नर-नारायणौ तपः आचरितुं प्रारम्भं कृतवन्तौ। इन्द्रः तयोः तपोभङ्गं कर्तुम् इच्छति। तदर्थं सः अप्सरास्त्रियः प्रेषितवान्। तदा नारायणस्य ऊरुतः उर्वशी उद्भूता। उर्वशी अत्यन्तसुन्दरी आसीत्। तस्याः अनुपमसौन्दर्यं दृष्ट्वा रम्भा-इत्यादयः लज्जिताः। पराजितः इन्द्रः नारायणस्य समीपम् आगत्य क्षमां प्रार्थितवान्। नारायणः इन्द्रम् उक्तवान् — "एताम् उर्वशीं स्वर्गं नयतु" इति। इन्द्रः तां स्वर्गं नीतवान्।

नर-नारायणौ सहस्रकवचेन सह युद्धं कृतवन्तौ। यदा एकः तपः करोति तदा अन्यः युद्धं करोति स्म। एवं क्रमेण सहस्रवर्षपर्यन्तं युद्धं अभवत्। युद्धे एकैकशः सहस्रकवचस्य सर्वे कवचाः छिन्नाः। अन्ते एकः एव कवचः अवशिष्टः। तदा भीतः सहस्रकवचः सूर्यमण्डलं प्रतिः पलायनं कृतवान्।

"आरम्भे अतीवपराक्रमं प्रदर्श्य अन्ते भीत्या पलायितवान् भीरुः। कृष्णावतारसमये 'एतस्य कृते किं दण्डनं दातव्यम्' इति चिन्तयामि" इति विष्णुः निश्चयं कृतवान्।





# समर्थः

दन्तपुरे पद्मनन्दः इति महाराजः । सः सर्वदा वेषपरिवर्तनं कृत्वा देशसञ्चारं करोति। एकदा सः एकस्मिन् ग्रामे सञ्चारं करोति स्म । तदा अकस्मात् तस्य अतीव-अनारोग्यम् अभवत् । पद्मनन्दः कः इति तस्मिन् ग्रामे कोऽपि न जानाति । तथाऽपि सीतारामः इति एकः कृषिकः पद्मनन्दस्य वैद्यकीयम् उपचारं कारितवान् । दिनत्रयपर्यन्तं पद्मनन्दः तस्य गृहे एव आसीत् । इदानीं सः सम्पूर्णस्वस्थः ।

अनन्तरं पद्मनन्दः ग्रामतः प्रस्थितवान् । गमनसमये सः सीतारामम् उक्तवान्- "भवान् मम कृते बहु उपकारं कृतवान् । तत् अहं कदापि न विस्मरामि । अतः अहं भवतः प्रत्यु-कारं कर्तुम् इच्छामि । भवान् किमपि इच्छति चेत् राजधानीम् आगच्छतु । महाराजस्य कृते अहं बहु परिचितः । अतः भवतः कार्यम् अवश्यं सिद्ध्यति" इति। 'स्वयम् एव महाराजः' इति सः न उक्तवान् ।

कृषिकः सविनयम् उक्तवान्– 'न, न, अहं प्रत्युपकारं किमपि न इच्छामि । अहं तु मम कर्तव्यं कृतवान्, तावदेव' इति । अनन्तरं सः पुनः उक्तवान्– "मम द्वितीयः पुत्रः दण्डकः इति अस्ति । सः कृषिकार्यं न जानाति । तस्य कृते नगरे कुत्रचित् उद्योगः दापनीयः इति विचारः अस्ति । किन्तु सः बहु गर्विष्ठः । अधिकारिभिः सह कथं व्यवहारः करणीयः इत्यपि न जानाति । अतः तस्य विषये किं करणीयम् इति चिन्तयन् अस्मि" इति ।

पद्मनन्दः उक्तवान्– "तर्हि एवं करोतु । भवतः पुत्रं मया सह प्रेषयतु । सः कथं पाठ-नीयः इति अहं जानामि । अहम् उपायान्तरेण तं पाठयामि । समुचितम् उद्योगम् अपि दाप-यामि । तस्य जीवनं यथा निश्चिन्तं भवेत् तथा व्यवस्थां करोमि । इतःपरं भवान् तस्य विषये



चिन्तां न करोतु'' इति ।

राजधानीं गन्तुं दण्डकस्य अपि बहु इच्छा आसीत् । इदानीम् अवकाशः लब्धः । सः पद्मनन्दनेन सह प्रस्थितवान् ।

प्रयाणं बहु दीर्घम् आसीत् । प्रयाणसमये पद्मनन्दः दण्डकस्य स्वभावं ज्ञातवान् । वस्तुतः दण्डकः अविमृश्यकारी शीघ्रकोपी च इति सः ज्ञातवान् । राजास्थाने उद्योगी भवितुम् एषः अर्हः न इति सः निश्चयं कृतवान् । किन्तु तस्य पितुः कृते वचनं दत्तम् आसीत् किल । तदर्थं किमपि करणीयम् एव आसीत् । पद्मनन्दः राजधानीं आगत्य एकस्यां धर्मशालायां दण्डकस्य वसतिव्यवस्थां कृतवान् ।

राजास्थाने शमन्तकः इति कश्चन अधिकारी आसीत् । सः राज्यस्य आयव्ययं पश्यति स्म । तस्य अधीने दश सहाधिकारिणः आसन् । तेषु एकैकस्य अधीने अपि द्वादशगणकाः आसन् । शमन्तकः अतीव समर्थः अधिकारी । सः सर्वैः अपि सम्यक् कार्यं कारयितुं शक्नोति इति तस्य विषये आस्थाने महद्गौरवम् आसीत् ।

पद्मनन्दः शमन्तकम् उक्तवान्— 'दण्डकः इति एकः युवकः अस्ति । सः भवतः अधीने कार्यं करोतु । सः किञ्चित् गर्विष्ठः, शीघ्रकोपी अपि । भवान् दण्डयति चेत् अपि तस्य भीतिः नास्ति । उद्योगतः निष्कासयति इत्यपि चिन्ता नास्ति । एतादृशः अविवेकी सः । तथाऽपि सः भवता पाठनीयः । यथा सः समीचीनः उद्योगी भवेत् तथा तं भवान् पाठयतु' इति ।

शमन्तकः उक्तवान्— ''अस्तु, महाराज ! अहं त सम्यक् पाठयामि । तस्य विषये इतःपरं चिन्ता एव मास्तु'' इति ।

अपरस्मिन् दिने दण्डकः शमन्तकस्य समीपम् आगतवान् । शमन्तकः दण्डकं कांश्चित् प्रश्नान् पृष्टवान् । दण्डकः तु औद्धत्येन सर्वेषां प्रश्नानां उत्तरम् दत्तवान् । किन्तु तेन शमन्तकः न कुपितः । सः उक्तवान् ''बहु समीचीनम् । भवतः उत्तराणि श्रुत्वा मम बहु आनन्दः अभवत् । भवतः कृते समीचीनां उद्योगव्यवस्थां

करोमि । प्रतिमासं पञ्चाशत् दीनाराणां वेतनं ददामि । भवतु किल ?" इति । दण्डकः सन्तोषेण एतत् अङ्गीकृतवान् ।

शमन्तकः एकं पुरुषं प्रदर्श्य दण्डकम् उक्तवान्- "पश्यतु, सः भवतः अधिकारी। सः यथा वदति तथा भवान् कार्यं करोतु" इति ।

दण्डकः दिनद्वयं कार्यं कृतवान् । अपरस्मिन् दिने दण्डकस्य अधिकारी शमन्तकसमीपम् आगत्य उक्तवान्-"भोः, सः दण्डकः स्वय किमपि कार्यं न करोति । अन्येषां कार्यं कर्तुं अवकाशम् अपि न ददाति । तेन किमपि प्रयोजनं नास्ति । तं पाठयितुम् अहं न शक्नोमि, क्षाम्यतु" इति ।

एतत् श्रुत्वा कुपितः शमन्तकः उक्तवान्- "भवतः अधीने विद्यमानकर्मकरैः कार्यं कारयितुं भवान् न शक्नोति किम्? यथाकथञ्चित् दण्डकेन कार्यं कारणीयम् एव । तेन कारयितुं न शक्नोति चेत् भवान् एव स्वयं तत्कार्यं करोतु" इति ।

सः तु दण्डकेन कार्यं कारयितुम् असमर्थः । दण्डकस्य कार्याणि अपि स्वयमेव कृतवान् । एतदर्थं दण्डकस्य विषये तस्य महान् क्रोधः । अतः सः प्रतिदिनं दण्डकं भापयति स्म । "भवान् एवं करोति इति महाराजः न जानाति। यदि सः जानाति, तर्हि भवन्तं निर्दय दण्डयति । अहं दयाशीलः अस्मि । अतः एव महाराजं न सूचितवान् । भवान् जागरूकः भवतु" इति ।

परन्तु दण्डकः न भीतः । महाराजः अन्यान् कथं दण्डयति इति सः दृष्टवान् । तथाऽपि सः न भीतः । पूर्ववत् एव कार्यं करोति स्म ।





कानिचन दिनानि अतीतानि। एकवारं पद्मनन्दराजः शमन्तकम् आहूय पृष्टवान्– 'दण्डकः कथम् अस्ति ? श्रद्धया कार्यं करोति वा ?' इति।

'अथ किम् ? सः इदानीं किञ्चित् परिष्कृतः अस्ति। तस्य विषये चिन्ता मास्तु' इति शमन्तकः उक्तवान्।

महाराजस्य तृप्तिः न अभवत्। स अन्येषां द्वारा दण्डकस्य विषयं ज्ञातवान्। पुनः शमन्तकं तर्जितवान्– 'किं भोः ! दण्डकः परिष्कृतः अस्ति इति असत्यम् एव उक्तवान् ? किन्तु सः पूर्ववत् एव अस्ति' इति।

'मया बुद्ध्या एव तथा कृतं महाराज ! सः अधिकारी दण्डकेन कार्यं कारयति। यदि कारयितुं न शक्नोति तर्हि सः असमर्थः इत्येव अर्थः। तदर्थं दण्डरूपेण दण्डकस्य कार्यं स्वयं करोति। तावदेव !' इति शमन्तकः उक्तवान्।

'सः अधिकारी असमर्थः चेत् अन्यस्य अधिकारिणः अधीने दण्डकः नियोजनीयः आसीत्। किमर्थं तथा न कृतवान् ?' इति महाराजः पृष्टवान्।

शमन्तकः उत्तरं दत्तवान्– 'दण्डकस्य स्वभावं सर्वे अपि अधिकारिणः जानन्ति। ते सर्वे तं स्वीकर्तुं न इच्छन्ति' इति।

'एवं तर्हि दण्डकं पाठयितुं भवान् असमर्थः इत्येव सिद्धम्। सत्यं किल ?' महाराजः पृष्टवान्।

शमन्तकः उक्तवान्– 'तथा न महाराज ! यद्यपि दण्डकः कार्यं न करोति। तथाऽपि तस्य कार्यं अन्यः करोति किल ? अतः कार्यं प्रचलति एव' इति।

'कार्यं प्रचलेत्, परन्तु दण्डकः करोति वा? सः तु पूर्ववत् अप्रयोजकः एव अस्ति। यदि भवान् तेन कार्यं कारयति, तदा एव भवान् समर्थः इति निरूपितं भवति' महाराजः उक्तवान्।

'अस्तु, तदर्थं मम कालावकाशः अपेक्षितः' इति शमन्तकः उक्तवान्। महाराजः एतत् अङ्गीकृतवान्।

अपरस्मिन् दिने शमन्तकः दण्डकम् उक्त-

वान्– 'भवान् राजास्थाने उद्योगे स्थातुम् इच्छति वा न वा ?'

दण्डकस्य तु आस्थानं बहु प्रियम्। अत्र अधिकः व्ययः अपि न आसीत्। वेतनम् अपि यथेष्टम् लभ्यते स्म। अतः सः नगरजीवनम् एव इच्छति स्म। अतः एव सः उक्तवान्– 'अहम् अत्रैव उद्योगम् इच्छामि' इति।

शमन्तकः किञ्चित्काल चिन्तयित्वा उक्तवान्– 'दण्डकः बहु गर्विष्ठः शीघ्रकोपी इति भवतः विषये अन्ये अधिकारिणः वदन्ति। किन्तु अहं तत् न विश्वसिमि। जनेषु वृत्तिमात्सर्यं भवति स्म। अतः एव ते तथा वदन्ति इति मन्ये। मम तु भवान् विनयशीलः एव इति भासते। अहम् एव किञ्चित्कालपर्यन्तं भवतः परीक्षां करोमि। अन्य-अधिकारिणां वचनं सत्यं चेत् भवन्तम् उद्योगतः निष्कासयामि। भवान् समर्थः इति निरूपितं भवति चेत् तम् अधिकारिणम् उद्योगतः निष्कासयामि। भवतः वेतनवृद्धिम् अपि करोमि' इति।

तद्दिनतः दण्डकस्य व्यवहारे महत्परिवर्तनम् अभवत्। सः अत्यन्तं विनयशीलः अभवत्। शीघ्रमेव सः उद्योगे समर्थः इति नाम अपि प्राप्तवान्।

एतद्विषयं ज्ञात्वा महाराजः आश्चर्येण शमन्तकं पृष्टवान्– 'कथं दण्डकः एवं परिवर्तितः? भवान् किं कृतवान्?' इति।

शमन्तकः उक्तवान्-'प्रथमं दण्डकाय राजास्थानस्य सुखभोगानां परिचयं कारितवान्। अनन्तरं अहं तम् उक्तवान्–'भवतः अधिकारी भवतः विषये आक्षेपं करोति। परन्तु तदहं न न विश्वसिमि। यदि भवान् समर्थः इति निरूपित भवति तर्हि तम् अधिकारिणम् उद्योगतः निष्कासयामि' इति। एतेन दण्डकः प्रभावितः। अतः सः यथाकथाञ्चित् आत्मानं समर्थं निरूपयितुं निश्चयं कृतवान्। अनन्तर सः एव अभ्यासः अभवत्। सः अपि समर्थः अभवत्।' इति।

शमन्तकस्य उत्तरेण महाराजः तृप्तः। सः शमन्तकं सत्कृतवान्।



# चित्रशीर्षिका-स्पर्धा पारितोषिकं ५०/-रूप्यकाणि ।

विजितां शीर्षिकां १९८४ अगस्ट् सञ्चिकायां प्रकटयिष्यामः ।





❀ उपरितन चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि- वाक्यद्वयेन लिखित्वा प्रेषयन्तु। ❀ जून् २० दिनाङ्कतः पूर्वम् एव शीर्षिकाः प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयामः। ❀ शीर्षिकासु अस्माभिः निर्णीतस्य अत्युत्तमस्य ५०/- रूप्यकात्मकं पारितोषिकम्। ❀ शीर्षिकाः समपत्रे (पोस्ट्कार्ड) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀ अधोनिर्दिष्टसङ्केतस्य कृते शीर्षिकाः प्रेषणीयाः।

चन्दमामा (संस्कृतम्), ७३/२ 'अक्षरम्', रङ्गारावमार्गः, शङ्करपुरम्, बेङ्गलूरु—४

'एप्रिल् चित्रशीर्षिका स्पर्धा- परिणामः'

प्रथमचित्रम्- बन्धनं ननु, निषीदावः।

द्वितीयचित्रम्- बन्धनं न हि, प्रसीदावः।

प्रेषकः - गु. गणपय्य होल्ल, नागबीदि, गोकर्ण-५८१३२६ (उ.क.) कर्णाटक.

---

## भवन्तः जानन्ति वा? (उत्तराणि)

१. बाणकविः। तस्य ग्रन्थद्वयम्- हर्षचरितम् कादम्बरी च। २. राबर्ट् ब्रोनिंग् तथा एलिजबेत् बारेट् ब्रोनिंग्। ३. ब्रोलेंट् ब्राण्टे तथा एमिली ब्राण्टे। ४. हन्स् क्रिस्टियन् एण्डर्सन्। ५. विलियम् शेक्सपीयर्।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिन-शब्दानां सान्दर्भिक–अर्थः

| | | | |
|---|---|---|---|
| भूस्वामी | Landlord | नौकानिस्थानम् | Port |
| व्याजः | Deceit | धनस्यूतः | Purse |
| मातुलः | Maternal Uncle | विपणिः | Market |
| झटिति | Quickly | लिपिकः | Clerk |
| नमयित्वा | Having bent | पितृव्या | Aunt |
| निम्बवृक्षः | Neem tree | श्वश्रूः | Mother-in-Law |
| शृगालः | Jackal | कौमुदी | Moonlight |
| अतिरिच्य | Having surpassed | जम्बूवृक्षः | Naweel tree |
| जल्पनम् | Prattling | कपित्थवृक्षः | Woodapple tree |
| पङ्गुः | Lame | आम्रवृक्षः | Mango tree |
| धृष्टा | Rude | अशनिः | Lightning |
| चुल्ली | Stove | पङ्कमयः | Muddy |
| भर्त्सनम् | Scolding | स्वास्थ्यम् | Health |
| तूष्णीम् | Quiet | गणकः | Accountant |
| प्रतिवेशिनः | Neighbours | नागः | Cobra |
| विकृतिम् आपन्नम् | Spo ilt | वल्मीकः | Ant hill |
| ऊधः | Teats | अहितुण्डिकः | Snake charmer |
| दोहनम् | Milking | व्रणः | Wound |
| निष्पीड्य | Having squeezed | उलूकः | Owl |
| जलूकः | Leech | गृध्रः | Kite |

# भोजनम्

| | |
|---|---|
| पुत्रः- अम्ब, भोजनं सिद्धं वा ? | Mother, is the food ready? |
| माता - किञ्चित् तिष्ठतु । पञ्चनिमेषेषु सिद्धं भवति । | Just wait a little. It will be ready in five minutes. |
| पु॰- शीघ्रम् । मम बुभुक्षा भवति । | Get it soon. I am very hungry. |
| मा॰- तर्हि स्थालिकां स्थापयतु । परिवेषयामि, उपविशतु । | If so take the plate and be seated. I shall serve. |
| पु॰- अद्य किं किं कृतवती ? | What are today's dishes? |
| मा॰- अधिकं किमपि नास्ति । केवलं सारः व्यञ्जनं च । | Not many. Just Rasam and Curry. |
| पु॰- क्वथितं न कृतवती वा ? | Did'nt you make sambar? |
| मा॰- कथं करोमि ? भवान् विलम्बः भवति इति वदति ! | How can I? You say it is late for you. |
| पु॰- सारे लवणं न्यूनम् । किञ्चित् लवणम् आनयतु । | Not enough salt in Rasam. Please get some salt. |
| मा॰- सावकाशं खादतु । | Eat slowly. |
| पु॰- अन्नं बहु उष्णम् अस्ति । | Rice is too hot. |
| मा॰- किञ्चित् व्यञ्जनं परिवेषयामि वा ? | shall I serve the curry? |
| पु॰- मास्तु । | No. |
| मा॰- किमर्थं ? न रोचते वा ? | Why? you Don't relish it? |
| पु॰- रोचते । रुचिकरम् अस्ति । | I relish it. |
| मा॰- तर्हि अन्नं परिवेषयामि । दधि अन्नं च खादतु । | If so I shall serve rice. Eat curd rice also. |
| पु॰- किञ्चित् पर्याप्तम् । | A little is enough. |
| मा॰- भवान् अद्य भोजनम् एव न कृतवान् । | Today you have not had enough. |
| पु॰- न, न । यथेष्टं स्वीकृतवान् । | No. I have had enough. |
| मा॰- तक्रं पिबति वा ? | Like to drink butter milk? |
| पु॰- अस्तु, एकचषकं ददातु । | Yes, please let me have a glass. |

# प्राचीन भारतस्य भव्यता तथा तेजस्विता चन्दमामायां




# चन्दमामा

**चन्दमामायाः** लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् अस्याः पाठकाः १,२०,००,००० बालकाः सन्ति ।

**चन्दमामायाः** प्रसारसंख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्वएशियादेशाणां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

प्रत्येकमासस्य कथासु दर्शितम् अस्ति भारतस्य सर्वाधिक प्रचारिता बालानां मासिकी